## आद्यन्ताभ्याम् ॥ ६ ॥

ग्रहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्रा। आदिर्वर्णोऽन्त्येन सह गृह्यमाणस्तन्नामा प्रत्याः। तथाहि-अकारो बकारेण सह गृह्यमाणःप्रत्याहारः। स च। अइउऋऌ एऐओऔ हयरल ञणनङम झढधघभ जडदगब-इत्येतावत्याकः संपद्यते। चटतकप-इति चपप्रत्याहाः जडदगब-इति जबप्रत्याहारः। झढधघभ-इति झभप्रत्याहारः। ञणनङम इति ञमप्रत्याहाः एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं स स तत्र ग्राह्यः॥ सङ्ख्यानियमस्तु नास्ति ६॥

## हसा व्यञ्जनानि ॥ ७ ॥

हकारादयः सकारान्ता वर्णा हसा व्यंजनानि भवन्ति। स्वरहीनं व्यञ्जनम्। तेष्वकारः सुखमुच्चारणार्थत्वादित्संज्ञको भवति ॥ ७ ॥

कार्यायेत् ॥ ८ ॥

प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चरितो वर्ण इत्संज्ञको भवति। यस्येत्संज्ञा तस्य लोपः ॥ ८ ॥

वर्णादर्शनं लोपः ॥ ९ ॥

वर्णविरोधो लोपश्च। प्रत्ययाऽदर्शनं लुक्। मित्रवदागमः। शत्रुवदादेशः ॥ ९ ॥

स्वरानन्तरिता हसाः संयोगः ॥ १० ॥

कुचुटुतुपुवर्गाः ॥

उकारः पञ्चवर्णपरिग्रहणार्थः ॥ १० ॥

अरेदो नामिनो गुणः ॥ ११ ॥

नामिनः स्थानिका अर् एत् ओ एते गुणसंज्ञका भवन्ति ॥ ११ ॥

आरैऔ वृद्धिः ॥ १२ ॥

आ आर् ऐ औ एते वृद्धिसंज्ञका भवन्ति ॥१२॥

अन्त्यस्वरादिष्टिः ॥ १३ ॥

अन्त्यो यः स्वरस्तदादिवर्णः स टिसंज्ञको भवति ॥ १३ ॥

## अन्त्यात्पूर्व उपधा ॥ १४ ॥

अन्त्यात् वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञको भवति ॥ १४ ॥

## असंयोगादिपरो ह्रस्वो लघुः॥१५॥ विसर्गानुस्वारसंयोगादिपरोदीर्घश्च गुरुः ॥ १६॥ मुखनासिकावचनोऽनुनासिकः ॥ १७ ॥

मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः (१७ द्विबिन्दुर्विसर्गः।शिरोबिंदुरनुस्वारः।अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा।लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। अमङणनानां नासिका च।ꣳक इति

जिह्वामूलीयः। ᳶप इत्युपध्मानीयः। ( अं इत्यनुस्वारः। अः इति विसर्गः )॥१५॥१६॥१७॥

इति सञ्ज्ञाप्रक्रिया।

## अधुना स्वरसन्धिरभिधीयते।

### इ यं स्वरे ॥ १ ॥

इवर्णो यत्वमापद्यते स्वरे परे। दधि आनय इति स्थिते दध्य् आनय इति तावद्भवति ॥ १ ॥

### हसेऽर्हे हसः ॥ २ ॥

स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति। इति धकारस्य द्वित्वम्। पुनर्द्वित्वे प्राप्ते न द्विरुक्तस्य द्विरुक्तिः। द्वित्वविधानसामर्थ्यात् द्वावेव शिष्येते अन्ये हसा लुप्यन्ते ॥ २ ॥

### झबे जबाः ॥ ३ ॥

झसानां झबे परे जबा भवन्ति इति पूर्वधकारस्य दकारः। सवर्णत्वात् ( वर्ग्यो वर्ग्येण सवर्णः) इति वचनात् यथासंख्यं वा वक्तव्यम्। ( स्वरहीनं

परेण संयोज्यम्)दध्द्यानयइतिसिद्धम्॥३॥गौरी अत्र।अर्ह् इति विशेषणान्न रेफस्य द्वित्वं किन्तु ।

रहाद्यपो द्विः ॥ ४ ॥

स्वरपूर्वाद्रेफाद्धकाराच्च परो यपो द्विर्भवति।'जलतुम्बिका' न्यायेन रेफस्योर्ध्वगमनम्।गौर्य्यत्र । स्वर इत्यनुवर्तते।एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदान्तरानुवृत्ति र्ज्ञातव्या।ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते४॥

उ वम् ॥ ५ ॥

उवर्णो वत्वमापद्यते स्वरे परे। मधु-अत्र-मध्वत्र५

ऋ रम् ॥ ६ ॥

ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ--अर्थः--पित्रर्थः ॥ ६ ॥

ऌ लम् ॥ ७॥

ऌवर्णो लत्वमापद्यते स्वरे परे । ऌ--अनुबन्धः लनुबन्धः ॥ ७ ॥

## ए अय् ॥ ८ ॥

एकारोऽय् भवति स्वरे परे।ने अनं नयनम् ॥८॥

## ओ अव् ॥ ९ ॥

ओकारोऽव् भवति स्वरे परे । लो अनं लवनम् । भो अति भवति ॥ ९ ॥

गवादेरवर्णागमोऽक्षादौ वक्तव्यः ॥ ❀ ॥

गो अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः । गो अजिनं गवाजिनम् । प्र ऊढः प्रौढः । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी-सेना।(क्वचित् स्वरवद्यकारः)यथाध्वपरिमाणे—गव्यूतिः। अन्यत्र गवां मिश्रीभावे गोयूतिः ॥

## ऐ आय् ॥ १० ॥

ऐकार आय् भवति स्वरे परे।नैअकः नायकः१०॥

## औ आव् ॥ ११ ॥

औकार आव् भवति स्वरे परे।तौ इह ताविह ११॥

## य्वोर्लोपश् वा पदान्ते ॥ १२ ॥

पदान्ते स्थितानामयादीनां यकारवकारयो-
र्लोपश् वा भवति स्वरे परे। तौ इह, ताविह ता
इह । ते आगताः, तयागताः, त आगताः । पटो
इह, पटविह, पट इह ॥ लोपशि पुनर्न सन्धिः ॥
छन्दसि तु भवति । हे सखे इति, हे सखयिति, हे
सखेति ॥ १२ ॥

## एदोतोऽतः ॥ १३ ॥

पदान्ते स्थितादेकारादोकाराच्चपरस्याकारस्य
लोपो भवति।ते अत्र तेऽत्र।पटो अत्र पटोऽत्र १३॥

## सवर्णे दीर्घः सह ॥ १४ ॥

सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा
अत्र, श्रद्धात्र । दधि इह दधीह । भानु उदयं
भानूदयम् ॥ १४ ॥

अदीर्घो दीर्घतां याति नास्तिदीर्घस्य दीर्घता॥

पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ १ ॥
सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ॥
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ २ ॥

अ इ ए ॥ १५ ॥

अवर्ण इवर्णे परे सह ए भवति । तव इदं तवेदम् । मम इदं ममेदम् ॥ १५ ॥

हलादेरीषादौ टेर्लोपो वक्तव्यः ॥ * ॥

हल ईषा हलीषा । लाङ्गल ईषा लाङ्गलीषा ॥ मनस् ईषा मनीषा ॥

( ओमि च ॥ १५ ॥

ओमि परे नित्यं टेर्लोपो भवति । अद्य ओम् अद्योम् ॥ १५ ॥ )

उ ओ ॥ १६ ॥

अवर्ण उवर्णे परे सह ओ भवति । गंगा उदकं गंगोदकम् ॥ १६ ॥

ऋ अर् ॥ १७ ॥

अवर्ण ऋवर्णे परे सह अर् भवति॥तव ऋद्धिः तवर्द्धिः ॥ ॥ १७ ॥

क्वचिदार् ॥ १८ ॥

अवर्ण ऋवर्णे परे सह क्वचिदार् भवति।ऋण ऋणम् ऋणार्णम् । शीत ऋत शीतार्तः ॥ १८॥

ऌ अल् ॥ १९ ॥

अवर्ण ऌवर्णे परे सह अल् भवति । तव ऌकारः तवल्कारः ॥ १९ ॥

ऋऌवर्णयोर्मिथः सावर्ण्यं वा वक्तव्यम् ॥ * ॥

होतृ ऌकारः होल्ल्कारः;होतृकारः ॥

रलयोः सावर्ण्यं वा वक्तव्यम् ॥ * ॥

परि अङ्कः पर्य्यङ्कः पल्यङ्कः ॥

ए ऐ ऐ ॥ २० ॥

अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति। तव एषा तवैषा। तव ऐश्वर्यं तवैश्वर्यम् ॥ २०॥

ओ औ औ ॥ २१ ॥

अवर्ण ओकारे औकारे च परे सह औकारो भवति। तव ओदनं तवौदनम्। तव औन्नत्यं तवौन्नत्यम् ॥ २१ ॥

ओष्ठोत्वोर्वौ समासे ॥ २२ ॥

अवर्ण ओष्ठोत्वोः परयोर्वा सह औ भवति समासे सति। बिम्ब ओष्ठः बिम्बौष्ठः बिम्बोष्ठः। स्थूल ओतुः स्थूलौतुः स्थूलोतुः। समासे किम् तवौष्ठः ॥ २२ ॥

इति स्वरसंधिः।

अथ प्रकृतिभाव उच्यते।

नामी ॥ १ ॥

अदसोऽमीशब्दः संधिं न प्राप्नोति। अमी आदित्याः। अमी उष्ट्राः। अमी एडकाः॥ १ ॥

य्वे द्वित्वे ॥ २ ॥

ई च ऊ च ए च य्वे ईकारान्त ऊकारान्त एका-

रान्तश्च शब्दो द्वित्वे वर्तमानः सन्धिं न प्राप्नोति॥ मणीवादिवर्ज्जम् ॥ ❀ ॥

अग्नी अत्र । पटू अत्र । माले आनय। मणीवादी-ति किम् ॥ मणी इव मणीव । रोदसी इव रोदसीव दम्पती इव दम्पतीव ॥ २ ॥

## ओ निपातः ॥ ३ ॥

आकार ओकारो निपात एकस्वरश्च सन्धिं न प्राप्नोति । आ एवं मन्यसे । नो अत्र स्थातव्यम्। उ उत्तिष्ठ। अ अपेहि। इ इंद्रं पश्य ॥ ३ ॥

## दूरादाह्वाने टेः प्लुतः ॥ ४ ॥

दूरादाह्वाने गाने रोदने विचारे च टेः प्लुतो भवति ॥ ४ ॥

## प्लुतः ॥ ५ ॥

प्लुतश्च सन्धिं न प्राप्नोति। देवदत्त ३ एहि॥५॥

इति प्रकृतिभावः ।

## अथ व्यञ्जनकार्य्यमुच्यते ।

### चपा अबे जबाः ॥ १ ॥

पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे । षट् अत्र षडत्र । वाक् यथा वाग्यथा ॥ १ ॥

### ञमे ञमा वा ॥ २ ॥

पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक् मात्रं वाग्मात्रम् वाङ्मात्रम् । षट् मम षड्मम षण्मम ॥ मयटि नित्यं वाच्यम् ॥ ❀ ॥ चित् मयम् । चिन्मयम् ॥ २ ॥

### चपाच्छशः ॥ ३ ॥

चपादुत्तरस्य शकारस्य छो वा भवति अबे परे॥ वाक् शूरः वाक्छूरः ॥ ३ ॥

### हो झभाः ॥ ४ ॥

चपादुत्तरस्य हकारस्य झभा वा भवंति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तत् हविः तद्धविः तद्हविः । वाक् हरिः वाग्घरिः वाग्हरिः ४ ॥

स्तोः श्चुना श्चुः ॥ ५ ॥

स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः।सकारस्य शकारः । तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः। तत् चित्रं तच्चित्रम्। तत् शास्त्रं तच्छास्त्रम् ॥ ५ ॥

न शात् ॥ ६ ॥

शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । विश् नः विश्नः । प्रश् नः प्रश्नः ॥ ६ ॥

ष्टुना ष्टुः ॥ ७ ॥

स्तोःसकारतवर्गयोःषकारटवर्गाभ्यां योगे ष्टुर्भवति।सकारस्य षकारः।तवर्गस्य टवर्गः॥कस्षष्ठः कष्षष्ठः । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥ ७ ॥

तोर्लि लः ॥ ८ ॥

तवर्गस्य लकारे परे लकारो भवति । तत्

लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति॥अन्तःस्था द्विप्रभेदा रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ॥ ८ ॥

न षि ॥ ९ ॥

षकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवान्षष्ठः ॥ ९ ॥

टोरन्त्यात् ॥ १० ॥

पदान्ते वर्त्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति।षट् नरःषण्नरःषड्नरः। षट् सीदन्ति षट् सीदन्ति ॥ १० ॥

नः सक्छते ॥ ११ ॥

नान्तस्य पदस्य छते परे सगागमो भवति ॥ टित्किताद्यन्तयोर्वक्तव्यौ ॥ ❀ ॥ टित्त्वादादौ कित्त्वादन्ते ॥ राजन् चित्रं राजंश्चित्रम् । भवान् तनोति भवांस्तनोति ॥ ११ ॥

## शे चग्वा ॥ १२ ॥

नान्तस्य पदस्य शे परे वा चगागमो भवति॥
भवान्शूरःभवाञ्च्छूरःभवाञ्च्शूरःभवाञ्शूरः ॥

## ङ्णनो ह्रस्वा द्विः स्वरे ॥१३ ॥

ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवंति स्वरे परे पदान्ते । प्रत्यङ् इदं प्रत्यङ्ङिदम्॥सुगण् इह सुगण्णिह । राजन् इह-राजन्निह ॥ १३ ॥

## छः ॥ १४ ॥

ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ १४ ॥

## खसे चपा झसानाम् ॥ १५ ॥

झसानां खसेपरे चपा भवंति।तव छत्रं तवच्छत्रम्। क्वचिद्दीर्घादपि वक्तव्यः ॥ ❀ ॥
ह्रीछः ह्रीच्छः ॥ म्लेछः म्लेच्छः ॥ १५ ॥

## मोऽनुस्वारः ॥ १६ ॥

मकारस्यानुस्वारो भवति हसे परे पदान्ते।तम् ह-

सति तं हसति । पटुम् वृथा पटुं वृथा ॥ १६ ॥

नश्चापदान्ते झसे ॥ १७ ॥

नकारस्य मकारस्य चापदान्ते वर्तमानस्यानु-स्वारो भवति झसे परे । यशान् सि यशांसि ॥ पुम् भ्यां पुंभ्याम् ॥ १७ ॥

यमा यपेऽस्य ॥ १८ ॥

अपदान्ते वर्तमानस्यानुस्वारस्य यमा भवन्ति यपे परेऽस्य यपस्य सवर्णाः । अं कितः अङ्कितः अं जनम् अञ्जनम् ॥ १८ ॥

वा ॥ १९ ॥

पदान्ते वर्तमानस्यानुस्वारस्य यमा वा भवन्ति यपे परे । तं करोति तङ्करोति ॥ तं तनोति तन्तनोति १९

यवलपरे यवला वा ॥ २० ॥

अनुस्वारस्य यवलपरे यवला वा भवन्ति । सं यन्ता सँय्यन्ता । संवत्सरः सँव्वत्सरः ॥ यं लोकं यँल्लोकम् ॥

छन्दसि ॥ २१ ॥

छन्दस्यनुस्वारोऽङ्कारमापद्यते शषसहरेफेषु परतः । हंसः हङ्सः ॥ २१ ॥

इति व्यञ्जनसंधिः ।

## अथ विसर्गसन्धिर्निगद्यते ।

### विसर्जनीयस्य सः ॥ १ ॥

विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ॥ १ ॥

### शषसे वा ॥ २ ॥

विसर्जनीयस्य शषसे परे वा सकारो भवति । कः शेते कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः ॥ २ ॥

### कुप्वोः ≍क ≍पौ वा ॥ ३ ॥

वि[illegible]र्जनीयस्य कवर्गपवर्गसम्बन्धिनि खसे परे ≍क ≍पौ वा भवतः । कपावुच्चारणार्थौ । कः करोति क ≍करोति । कः पचति क ≍पचति । कः पठति क ≍पठति । (वाचस्पत्यादयः संज्ञाशब्दा

निपातात्साधवः)।यल्लक्षणेनानुपपन्नं तत्सर्वं नि-
पातात्सिद्धम् । वाचः पतिः वाचस्पतिः ॥
तद्बृहतोःकरपत्योश्चोरदेवतयोःसुट्तलोपश्च *॥
तत् करः तस्करः । बृहत् पतिः बृहस्पतिः॥३॥

अह्नो रोऽरात्रिषु ॥ ४ ॥

अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्या-
दिगणवर्जितेषु परतः । अहः पतिः अहर्पतिः ।
अहः गणः अहर्गणः ॥ ४ ॥

अरात्रिष्विति विशेषणात् । अहः रात्रः अहो-
रात्रः । अहः रूपम् अहोरूपम् । अहःरथन्तरम्
अहोरथन्तरम् ॥ ४ ॥

अतोऽत्युः ॥ ५ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति
अति परतः । कः अर्थः कोऽर्थः ॥ ५ ॥

हवे ॥ ६ ॥

अकारात्परस्य विसर्जनीयस्य उकारो भवति

हबे परे । कः गतः को गतः । देवः याति देवो याति । मनः रथः मनोरथः ॥ ६ ॥

## आदबे लोपश् ॥ ७ ॥

अवर्णात्परस्य विसर्जनीयस्य लोपश् भवति अबे परे । देवाः अत्र देवा अत्र । वाताः वांति वाता वांति ॥ ७ ॥

## स्वरे यत्वं वा ॥ ८ ॥

अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र देवायत्र देवा अत्र ॥८॥

## भोसः ॥ ९ ॥

भोस् भगोस् अघोस् इत्येतेषां विसर्जनीयस्य लोपश् भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ॥ ९ ॥

## नामिनो रः ॥ १० ॥

नामिनः परस्य विसर्जनीयस्य रेफो भवति

अबे परे । अग्निः अत्र अग्निरत्र । पटुः यजते पटुर्यजते ॥ १० ॥

उषसो रो बुधे ॥ ११ ॥

उषसो विसर्जनीयस्य रेफो भवति बुधे परे । उषः बुधः उषर्बुधः ॥ ११ ॥

रेफप्रकृतिकस्य खपे वा ॥ १२ ॥

रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गी ᳲ पतिः गीर्पतिः ( गीष्पतिः ) ॥ १२ ॥

रः ॥ १३ ॥

रेफसम्बन्धिविसर्जनीयस्य रेफो भवत्यबे परे। प्रातः अत्र प्रातरत्र । अन्तःगतःअन्तर्गतः॥ १३॥

रि लोपो दीर्घश्च ॥ १४ ॥

रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति॥ १४ ॥

## सैषाद्धसे ॥ १५ ॥

सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश्च भवति हसे परे । सः चरति स चरति एषः हसति एष हसति । सैषादितिसंहिता-"सैष दाशरथी रामःसैष राजायुधिष्ठिरः॥सैषकर्णोमहात्यागीसैष भीमो महाबलः ॥" इत्यादौ पादपूरणे सन्ध्यर्थो। यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ॥ सेमां भूम्याददे सोपामित्यादीनामदुष्टता ॥१५॥

## क्वचिन्नामिनोऽवे लोपश्च ॥ १६ ॥

नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश्च भवत्यवे परे। भूमिः आददे भूम्याददे ॥ १६ ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषाक्वचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥ धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ २ ॥

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥
षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ३॥
वर्णनाशविकाराभ्यां धातोरतिशयेन यः ॥
योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ४ ॥"

इति विसर्गसंधिः ।

## अथ षड्लिङ्गाः ।

## तत्रादौ स्वरान्तपुँल्लिङ्गाः ॥

अथविभक्तिर्विभाव्यते।साद्विधास्यादिस्त्यादिश्च।

**विभक्त्यन्तं पदम् ॥ १ ॥**

तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते ॥ १ ॥

**अविभक्ति नाम ॥ २ ॥**

विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपंनामोच्यते । कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित् ॥ २ ॥

**तस्मात् सि औ जस्, अम् औ शस्, टा भ्यां भिस्, ङे भ्यां भ्यस्,ङसि भ्यां**

भ्यस्,ङस् ओस् आम्,ङि ओस् सुप्॥३॥

तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति ।तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचने देव सि इति स्थिते इकार उच्चारणार्थः॥३॥

स्रोर्विसर्गः ॥ ४ ॥

सकाररेफयोर्विसर्जनीयादेशो भवतिअधातोः रसे पदान्ते च। देवः । द्वित्वविवक्षायां देवौ।बहुत्वविवक्षायां प्रथमाबहुवचने जस् ।जसोजस्येत्संज्ञायां तस्य लोपः। प्रयोजनं जसीति विशेषणार्थम्। देव अस् इति स्थिते। दीर्घविसर्गौ। देवाः॥ अकाराज्जसोऽसुक्कचिद्वक्तव्यः ॥ ❀ ॥

देवासः । ब्राह्मणासः।द्वितीयैकवचने देवअम् इति स्थिते ॥ ४ ॥

अम्शसोरस्य ॥ ५ ॥

समानादुत्तरयोरम्शसोरकारस्यलोपो भवत्य-

धातोः। देवम्। देवौ । बहुवचने देव शस् इति स्थिते । शकारः शसीति विशेषणार्थः ॥ ५ ॥

सो नः पुंसः ॥ ६ ॥

पुँल्लिङ्गात् समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ ६ ॥

शसि ॥ ७ ॥

शसि परे पूर्वस्य स्वरस्य दीर्घो भवति। (यदादेशस्तद्वद्भवति, न तु वर्णमात्रविधौ)देवान्। तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबंधष्टेनेतिविशेषणार्थः ॥ ७ ॥

टेन ॥ ८ ॥

अकारात्परष्टा इनो भवति । देवेन ॥ ८ ॥

अद्भि ॥ ९ ॥

अकारस्य आकारादेशो भवति भकारे परे। देवाभ्याम् ॥ ९ ॥

भ्यः ॥ १० ॥

अकारात् परस्य भिसो भकारस्याकारादेशो भवति। "अइ ए" "एऐ ऐ"। विसर्जनीयः। देवैः॥ अकारस्य भिसि छन्दस्येकारोवावक्तव्यः॥ ❀ ॥ देवेभिः। कर्णेभिः। चतुर्थ्येकवचने देव ङे इति स्थिते। ङकारो ङित्कार्य्यार्थःसर्वत्र॥१०॥

ङेरक् ॥ ११ ॥

अकारात् परस्य ङेइत्येतस्यअगागमोभवति। कित्त्वादन्ते। एअय्। दीर्घः। देवाय। देवाभ्याम्। पूर्ववत्॥चतुर्थीबहुवचने देवभ्यस् इति स्थिते ११

ए स्मि बहुत्वे ॥ १२ ॥

अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति। देवेभ्यः। पञ्चम्येकवचने देव ङसि इति स्थिते ॥ १२ ॥

ङसिरत् ॥ १३ ॥

अकारात्परोङसिरद्भवति। दीर्घः। देवात्। देवाभ्याम्

देवेभ्यः। षष्ठ्येकवचने देव ङस् इति स्थिते॥ १३॥

## ङस्स्य ॥ १४ ॥

अकारात्परो ङस् स्यो भवति। देवस्य। षष्ठी-द्विवचने देव ओस् इति स्थिते ॥ १४ ॥

## ओसि ॥ १५ ॥

अकारस्य ओसि परे एत्वं भवति। देवयोः॥ १५॥

## नुडामः ॥ १६ ॥

समानात्परस्यामो नुडागमो भवति। टित्त्वादादौ। उकार उच्चारणार्थः ॥ १६ ॥

## नामि ॥ १७ ॥

नामि परेपूर्वस्यदीर्घोभवति। देवानाम्। सप्तम्येकवचने देव ङि इति स्थिते। "अइ ए" देवे। देवयोः पूर्ववत्। सप्तमीबहुवचने देव सुप् इति स्थिते। पकारस्येत्संज्ञायां लोपः। ए स्भि बहुत्वे॥ १७॥

## क्विलात् षः सः कृतस्य ॥ १८ ॥

कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित् सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ॥ १८ ॥

## आमन्त्रणे सिर्द्धिः ॥ १९ ॥

आमन्त्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्द्धिसंज्ञको भवति ॥ १९ ॥

## समानाद्धेर्लोपोऽधातोः ॥ २० ॥

समानादुत्तरस्य धेर्लोपो भवत्यधातोः । (आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः) । हे देव। हे देवौ। हे देवाः । एवं घटपटस्तंभकुम्भादयोप्यकारान्ताः पुंल्लिङ्गाः ॥ अकारान्तानामपि सर्वादीनां तु विशेषः ॥

सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, कतर, कतम, सम, सिम, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व,

अन्तर, त्यद्, तद्, यद्, एतद्, इदम् अदस्, द्वि, किम्, युष्मद्, अस्मद्, भवतु । एते सर्वादयस्त्रिलिंगाः। तत्र पुँल्लिङ्गत्वेन रूपं ज्ञेयम् ॥ २० ॥

जसी ॥ २१ ॥

सर्व्वादेरकारान्तात्परो जस् ई भवति । सर्व्वः। सर्व्वौ । सर्व्वे । सर्वम् । सर्व्वौ । सर्व्वान् ॥२१॥

षृनां णोऽनन्ते ॥ २२ ॥

षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति । सर्वानित्यादि ॥ २२ ॥

अवकुप्वन्तरेऽपि ॥ २३ ॥

अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण।सर्वाभ्याम्। सर्वैः ॥ २३ ॥

सर्वादेः स्मट् ॥ २४ ॥

सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्म-

डागमो भवति । सर्वस्मै, सर्वाभ्याम्, सर्वेभ्यः । पञ्चम्येकवचने सर्व ङसि इति स्थिते ॥ २४ ॥

अतः सर्वादेः ॥ २५ ॥

अकारान्तात्परस्यातः स्मडागमो भवति। सर्वस्मात्, सर्वाभ्याम्, सर्वेभ्यः। सर्वस्य, सर्वयोः २५॥

सुडामः ॥ २६ ॥

सर्वादेः परस्यामः सुडागमो भवति। सर्वेषाम् २६॥

ङि स्मिन् ॥ २७ ॥

सर्वादेरकारान्तात्परो ङि स्मिन् भवति । सर्वस्मिन्, सर्वयोः, सर्वेषु ॥ एवं विश्वादीनामेकशब्दपर्यन्तानां रूपं ज्ञेयं डतरडतमौ विहाय। तौ प्रत्ययौ। ततस्तदंताःशब्दा ग्राह्याः ॥ पूर्वादीनां तु नवानां जसि ईकारो वा वक्तव्यः ॥ पूर्वे पूर्वाः । परे पराः । इत्यादि ॥

ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ॥ पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे इत्यादि ॥ प्रथम-

चरमतयायडल्पार्द्धकतिपयनेमानां जसीकारो वा वक्तव्यः ॥ ❀ ॥

प्रथमे प्रथमाः । चरमे चरमाः । शेषं देववत् । तयायडौ प्रत्ययौ । ततस्तदन्ताः शब्दा ग्राह्याः ।

॥तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यम् ❀

द्वितीयस्मै द्वितीयाय । द्वितीयस्मात् द्वितीयात् । द्वितीयस्मिन् द्वितीये । एवं तृतीयः

उभयशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः उभयोः ।

उभयब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः इत्यादि ॥ २७ ॥

अकारान्तः पुंलिङ्गो मासशब्दः ।

## मासस्याल्लोपो वा ॥ २८ ॥

मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ २८ ॥

## हसेपः सेर्लोपः ॥ २९ ॥

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति। माः मासः, मासौ मासौ, मासः मासाः। मासं मासं, मासौ मासौ, मासः मासान् । मासा मासेन, माभ्यां मासाभ्यां, माभिः मासैः। मासे मासाय, माभ्यां मासाभ्यां, माभ्यः मासेभ्यः। मासः मासात्, माभ्यां मासाभ्यां, माभ्यः मासेभ्यः। मासः मासस्य, मासोः मासयोः, मासां मासानाम्। मासि मासे, मासोः मासयोः, मांःसु मास्सु मासेषु। हे माः हे मास, हे मासौ हे मासौ, हे मासः हे मासाः॥ आकारान्तः पुंलिङ्गः सोमपाशब्दः। सोमपाः सोमपौ सोमपाः। अधातोरिति विशेषणाद्धेर्लोपो नास्ति। हे सोमपाः। सोमपाम् सोमपौ। बहुवचने सोमपा अस् इति स्थिते॥

## आतो धातोर्लोपः ॥ ३० ॥

धातुसम्बंधिन आकारस्य लोपो भवति शसादौ स्वरे परे। सोमपः। सोमपा, सोमपाभ्याम्, सोमपा-

भिः। सोमपे, सोमपाभ्याम्, सोमपाभ्यः। सोमपः, सोमपाभ्यां, सोमपाभ्यः। सोमपः सोमपोः सोमपाम् सोमपि, सोमपोः सोमपासु। एवं कीलालपाशंख-ध्माप्रभृतयः ॥ ३० ॥ इकारान्तः पुँल्लिङ्गो हरिशब्दः। तस्य प्रथमैकवचने हरिः।

## औ यू ॥ ३१ ॥

इकारान्तादुकारान्ताच्च परः औ यू आपद्यते। ई ऊ भवतः। हरी ॥ ३१ ॥

## ए ओ जसि ॥ ३२ ॥

इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति। हरयः ॥ ३२ ॥

## धौ ॥ ३३ ॥

इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति। हे हरे। हे हरी। हे हरयः। हरिम्, हरी, हरीन् ॥ ३३ ॥

## टा नास्त्रियाम् ॥ ३४ ॥

इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम् । हरिणा, हरिभ्यां, हरिभिः ॥ ३४ ॥

## ङिति ॥ ३५ ॥

इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति। हरये हरिभ्यां हरिभ्यः ॥३५॥

## ङसिङसोरस्य ॥ ३६ ॥

एदोद्भ्यां परस्यङसिङसोरकारस्य लोपो भवति। हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्॥३६॥

## ङेरौ डित् ॥ ३७ ॥

इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित्॥३७॥

## डिति टेः ॥ ३८ ॥

डिति परे टेर्लोपो भवति। हरौ, हर्य्योः, हरिषु। एवमग्निगिरिरविकविप्रभृतयःएतैरेवसूत्रैःसिध्यंति उकारान्ताश्च विष्णुवायुभानुप्रभृतयःएतैरेव सूत्रैः

सिध्यन्ति । उकारान्तः पुँल्लिंगो भानुशब्दः । भानुः भानू भानवः।भानुं भानू भानून्। भानुना भानुभ्यां भानुभिः । भानवे भानुभ्यां भानुभ्यः । भानोःभानुभ्यां भानुभ्यः। भानोःभान्वोःभानूनाम्।भानौ भान्वोःभानुषु।हे भानो इत्यादि॥३८॥

सखिशब्दस्य भेदः ॥

## सेर्डाऽधेः ॥ ३९ ॥

सखिशब्दात्परस्य सेरधेः डा भवति स च डित्॥ डित्त्वाट्टिलोपः । सखा । अधेरिति विशेषणादेकारो धिविषये । हेसखे ॥ ३९ ॥

## ऐ सख्युः ॥ ४० ॥

सखिशब्दस्यैकारो भवति पञ्चसु परेषु(षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः) सखायौ॥४०॥

## द्विवचनस्यावा छन्दसि ॥ ४१ ॥

द्विवचनस्य औ आ भवति वेदे । सखाया । सखायः । सखायं; सखायौ, सखीन् ॥ ४१ ॥

## सखिपत्योरीक् ॥ ४२ ॥

सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः। दीर्घत्वान्न ना। सख्या ।( आगमजमनित्यम् )सखिना। पतिना। सखिभ्यां,सखिभिः। सख्ये, सखिभ्याम्,सखिभ्यः ॥ ४२ ॥

## ऋङ् ङे ॥ ४३ ॥

सखिपतिशब्दयोॠगागमो भवति ङसिङसो- रकारे परे ॥ ४३ ॥ सख्यृ अस् इति स्थिते ॥

## ऋतो ङ उः ॥ ४४ ॥

ऋकारान्तात्परस्य ङसिङसोरकारस्यउकारो भवति स च डित्। "डिति टेः"।सख्युः,सखिभ्यां सखिभ्यः। सख्युः, सख्योः, सखीनाम्।सप्तम्येकवचने ङेरौडिदित्यौकारे कृते सखिपतिशब्दयोरीगागमो भवति। सख्यौ, सख्योः सखिषु। पतिशब्दस्यप्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया। तृतीयादौ तु सखिशब्दवत्प्रक्रिया। (पतिरसमास

एव संखिवद्वक्तव्यः) ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना, प्रजापतये इत्यादि ॥४४॥

द्विशब्दो नित्यं द्विवचनान्तः। द्वि औ इति स्थिते॥

त्यदादेष्टेरः स्यादौ ॥ ४५ ॥

त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ, द्वौ, द्वाभ्यां, द्वाभ्यां, द्वाभ्यां; द्वयोः, द्वयोः ।( त्यदादीनां घेरभावः)। त्रिशब्दो नित्यं बहुवचनान्तः। त्रि जस् इति स्थिते त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः, त्रिभ्यः ॥ ४५ ॥

त्रेरयङ् ॥ ४६ ॥

त्रिशब्दस्यायङादेशो भवति नामि परे । ( ङिदन्तस्य वक्तव्यः ) । त्रयाणां, त्रिषु ॥४६॥

कतिशब्दो नित्यं बहुवचनान्तः ।

जश्शसोर्लुक् ॥ ४७ ॥

कतिशब्दाज्जश्शसोर्लुग्भवति। प्रत्ययलोपे प्रत्ययलक्षणम् ❀ (लुकि न तन्निमित्तम्) कति, कति,

कतिभिः, कतिभ्यः, कतिभ्यःकतीनां, कतिषु,। त्रिषु लिंगेषु चायं सद्रूपः ॥ ४७ ॥

ईकारान्तः पुंलिंगः सुश्रीशब्दः ।

य्वोर्धातोरियुवौ स्वरे ॥ ४८ ॥

धातोरीकारोकारयोरियुवौ भवतः स्वरे परे। सुश्रीः सुश्रियौ सुश्रियः । हे सुश्रीः हे सुश्रियौ हे सुश्रियः । सुश्रियं सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्यां सुश्रीभिः । सुश्रिये सुश्रीभ्यां सुश्रीभ्यः। सुश्रियः सुश्रीभ्यां सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियाम्। सुश्रियि सुश्रियोः सुश्रीषु ॥ तथैव सुधीशब्दः ॥

ऊकारान्तः पुंलिंगः स्वयम्भूशब्दः। स्वयंभूः स्वयंभुवौ स्वयंभुवः । स्वयंभुवं स्वयंभुवौ स्वयं-भुवः । स्वयंभुवा स्वयंभूभ्यां स्वयंभूभिः।स्वयंभुवे स्वयंभूभ्यां स्वयंभूभ्यः । स्वयंभुवः स्वयं-भूभ्यां स्वयंभूभ्यः । स्वयंभुवः स्वयंभुवोः स्वयंभुवाम् । स्वयंभुवि स्वयंभुवोः स्वयंभूषु ४८

सेनानीशब्दस्याविशेषो हसादौ, स्वरादौ तु-विशेषः। सेनानी औ इति स्थिते।

## य्वौ वा ॥ ४९ ॥

धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकारान्नास्ति तदन्तस्यानेकस्वरस्य ईकारस्य ऊकारस्य च यकारवकारौभवतः स्वरे परे वर्षाभूपुनर्भूव्यतिरिक्तभूसुधीशब्दौ वर्जयित्वा। वाग्रहणादियं विवक्षा। सेनानीः सेनान्यौ सेनान्यः। हे सेनानीः हे सेनान्यौ हे सेनान्यः। सेनान्यं सेनान्यौ सेनान्यः।सेनान्या सेनानीभ्यां सेनानीभिः।सेनान्ये सेनानीभ्यां सेनानीभ्यः। सेनान्यः सेनानीभ्यां सेनानीभ्यः। सेनान्यः सेनान्योः।

सेनान्यादीनांवामो नुड् वक्तव्यः ॥ ❀ ॥

सेनानीनाम् सेनान्याम् ४९ ॥

## आम् ङेः ॥ ५० ॥

आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति। सेनान्यां सेनान्योः सेनानीषु। वातप्रमी-

शब्दस्य भेदः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । हे वातप्रमीः हे वातप्रम्यौ हे वातप्रम्यः । वातप्रमीं, वातप्रम्यौ, वातप्रमीन् । वातप्रम्या, वातप्रमीभ्यां, वातप्रमीभिः । वातप्रम्ये, वातप्रमीभ्यां, वातप्रमीभ्यः । वातप्रम्यः, वातप्रमीभ्यां, वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः । आमि नुट् । वातप्रमीनाम् । ङौ तु सवर्णदीर्घः । वातप्रमी, वातप्रम्योः, वातप्रमीषु । एवं ग्रामणीप्रभृतयः सेनानीवत् । ऊकारान्ताश्च यवलूप्रभृतयः ॥ ५० ॥

ऋकारान्तः पुँल्लिगः पितृशब्दः ।

## सेरा ॥ ५१ ॥

ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्त्वाट्टेर्लोपः । पिता ॥ ५१ ॥

## अर्पंचसु ॥ ५२ ॥

ऋकारोऽर्भवति पञ्चसु परेषु । पितरौ पितरः ॥ ५२ ॥

## धेरर ॥ ५३ ॥

ऋकारान्तात्परस्य घेरर् भवति स च डित् । डित्वाट्टिलोपः । हे पितः, हे पितरौ, हे पितरः । पितरं, पितरौ, पितॄन् । पित्रा, पितृभ्यां, पितृभिः । पित्रे, पितृभ्यां, पितृभ्यः । पितुः, पितृभ्यां, पितृभ्यः । पितुः, पित्रोः, पितॄणाम् ॥ ५३ ॥

ङौ ॥ ५४ ॥

ऋकारस्यार्भवति ङौ परे । पितरि, पित्रोः, पितृषु । एवं जामातृभ्रात्रादयः । एवं नृशब्दः । ना, नरौ, नरः । नरं, नरौ, नॄन् । न्रा, नृभ्यां, नृभिः । न्रे, नृभ्यां, नृभ्यः । नुः, नृभ्यां, नृभ्यः । नुः, न्रोः ॥ ५४ ॥

नुर्वा नामि दीर्घः ॥ ५५ ॥

नृशब्दस्य नामि परे वा दीर्घो भवति । नॄणां-नृणाम् । नरि, न्रोः, नृषु । हे नः, हे नरौ, हे नरः ॥ ५५ ॥
कर्तृशब्दस्य पञ्चसु विशेषः ।

स्तुरार् ॥ ५६ ॥

सकारतृप्रत्ययसम्बन्धिन ऋकारस्यार्भवति

पंचसु परेषु। कर्तार् सि इति स्थिते।(यदादेशस्तद्वद्भवति)। "सेरा"। डित्वाट्टेर्लोपः। कर्ता॥ कर्तारौ, कर्तारः। हे कर्तः, हे कर्तारौ, हे कर्तारः॥ कर्तारं, कर्तारौ, कर्तॄन्। कर्त्रा,कर्तृभ्यां,कर्तृभिः॥ कर्त्रे, कर्तृभ्यां,कर्तृभ्यः। कर्तुः,कर्तृभ्यां,कर्तृभ्यः। कर्तुः, कर्त्रोः, कर्तॄणाम्। कर्तरि, कर्त्रोः, कर्तृषु। एवं नप्तृहोतृप्रशास्तृप्रभृतयः॥ उकारान्तस्य क्रोष्टुशब्दस्य भेदः।

उकारान्तस्यापि क्रोष्टुशब्दस्य पंचस्वधिषु तृप्रत्ययान्तस्येव रूपं वक्तव्यम्॥ ❀॥

क्रोष्टा क्रोष्टारौ क्रोष्टारः। क्रोष्टारं क्रोष्टारौ। शसि तृप्रत्ययान्तवद्भावाभावात् क्रोष्टून्।

तृतीयादौ स्वरादौ तृप्रत्ययान्तता
वा वक्तव्या॥ ❀॥

क्रोष्ट्रा, क्रोष्टुना, क्रोष्टुभ्यां, क्रोष्टुभिः। क्रोष्ट्रे, क्रोष्टवे,क्रोष्टुभ्यां,क्रोष्टुभ्यः।क्रोष्टुः,क्रोष्टोःक्रोष्टुभ्यां क्रोष्टुभ्यः।क्रोष्टुःक्रोष्टोः,क्रोष्ट्रोः क्रोष्ट्वोः,क्रोष्टूनाम्।

(कृताकृतप्रसंगी यो विधिः स नित्यः। नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान्) इति नुडागमे कृते ह्रस्वादित्वान्तृज्वद्भावो नास्ति। क्रोष्टरि, क्रोष्टौ, क्रोष्ट्रोः, क्रोष्ट्रोः, क्रोष्टुषु। ऋकारान्ता ऌकारान्ता एकारान्ताश्चाप्रसिद्धाः ॥ ५६ ॥

एकारान्तः पुँल्लिङ्गः सुरैशब्दः।

## रै स्भि ॥ ५७ ॥

रैशब्दस्याऽऽकारादेशो भवति सकारभकारादौ विभक्तौ परतः। सुराः। स्वरादौ सर्वत्रायादेशः। सुरायौ, सुरायः। हे सुराः, हे सुरायौ, हे सुरायः। सुरायं सुरायौ सुरायः। सुराया, सुराभ्याम्, सुराभिः। इत्यादि ॥ ५७ ॥

ओकारान्तः पुँल्लिङ्गो गोशब्दः।

## ओरौ ॥ ५८ ॥

ओकारस्यौकारादेशो भवति पंचसु परेषु। गौः, गावौ, गावः। हे गौः, हे गावौ, हे गावः ॥ ५८ ॥

## आम्शसि ॥ ८९ ॥

ओकारस्याऽऽत्वं भवति अमि शसि च परे। गाम्, गावौ, गाः । गवा, गोभ्यां, गोभिः। गवे, गोभ्यां गोभ्यः । ङसीत्यकारलोपः । गोः, गोभ्यां, गोभ्यः। गोः, गवोः ( गोर्नुड्वा छन्दसि ) गोनाम् गवाम् । गवि, गवोः, गोषु । एवं सुद्योशब्दः । ग्लौशब्दस्य हसादावविशेषः स्वरादावावादेशः॥ ग्लौः ग्लावौ, ग्लावः । ग्लावं, ग्लावौ, ग्लावः। ग्लावा, ग्लौभ्यामित्यादि ॥ ८९ ॥

॥ इति स्वरान्ताः पुँल्लिंगाः ॥

## अथ स्वरान्ताः स्त्रीलिंगाः प्रदर्श्यन्ते ॥

तत्राऽऽबन्तो गंगाशब्दः ।

## आबतः स्त्रियाम् ॥ १ ॥

अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप्प्रत्ययो भवति

## आपः ॥ २ ॥

आंबन्तात्परस्य सेर्लोपो भवति । गंगा ॥ २ ॥

## औरी ॥ ३ ॥

आबन्तात्पर औ ईकारमापद्यते । " अ इ ए " । गंगे गंगाः ॥ ३ ॥

धिरिः ॥ ४ ॥

आबन्तात्परो धिरिर्भवति हे गंगे ॥ ४ ॥

अम्बादीनां धौ ह्रस्वः ॥ ५ ॥

अम्बादीनां धौपरे ह्रस्वो भवति। हे अम्ब, हे अक्क, हे अल्ल असंयुक्तानां डलकवतीनां प्रतिषेधो वाच्यः ॥

हे अम्बाडे, हे अम्बाले, हे अम्बिके इत्यादौ ह्रस्वो न भवति। गंगा, गंगे, गंगाः ॥ ५ ॥

टौसोरे ॥ ६ ॥

आबन्तस्य टौसोः परयोरेत्वं भवति। अयादेशः । गंगया, गंगाभ्यां, गंगाभिः ॥ ६ ॥

ङितां यट् ॥ ७ ॥

आबंतात्परेषां ङे ङसि ङस् ङि इत्येतेषां यडागमो भवति । टकारस्थाननियमार्थः । गंगायै, गंगाभ्यां, गंगाभ्यः । गंगायाः, गंगाभ्यां गंगाभ्यः । गंगायाः, गंगयोः ।

आबन्तादीबन्तादामो नुट् वक्तव्यः ॥ ❀ ॥ गङ्गानाम् । आम् ङेः । गंगायां, गंगयोः, गंगासु । एवं श्रद्धामेधाशालामालाहेलादोलाप्रभृतयः । सर्वादीनां तु ङित्सु विशेषः ॥ ७ ॥

यटोच्च ॥ ८ ॥

आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चाऽऽपोऽकारो भवति । सर्वस्यै सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वयोः सर्वासाम् । सर्वस्यां सर्वयोः सर्वासु ।

आकारान्तो जराशब्दः ।

जरायाः स्वरादौ जरस् वा वक्तव्यः ॥ ❀ ॥ जरा जरसौ जरे जरसः जराः । जरसं जरां जरसौ जरे जरसः जराः । जरसा जरया, जराभ्यां जराभिः । जरसे जरायै जराभ्यां जराभ्यः । जरसः जरायाः जराभ्यां जराभ्यः । जरसः जरायाः जरसोः जरयोः जरसां जराणाम् । जरसि जरायां जरसोः

जरयोः जरासु । हे जरे हे जरसौ हे जरे हे जरसः हे जराः । इकारान्तः स्त्रीलिंगो बुद्धिशब्दः । तस्य च प्रथमाद्वितीययोः हरिशब्दवत् प्रक्रिया। बुद्धिः बुद्धी बुद्धयः । बुद्धिं बुद्धी बुद्धीः।स्त्रीत्वाच्छसोनत्वाभावः।बुद्ध्या बुद्धिभ्यांबुद्धिभिः॥८॥

## इदुद्भ्याम् ॥ ९ ॥

स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति। बुद्ध्यै बुद्धये बुद्धिभ्यां बुद्धिभ्यः । बुद्ध्याः बुद्धेः बुद्ध्योः बुद्धीनाम् ॥ ९ ॥

## स्त्रियां योः । १० ॥

इश्च उश्च युः । तस्मात् इवर्णान्तादुवर्णान्ताच्च स्त्रियांवर्तमानात्परस्यङेरामादेशोभवति।बुद्ध्याम् अडागमाभावे आमोऽप्यभावः । बुद्धौ बुद्ध्योःबुद्धिषु। एवं मतिभूतिविभूतिधृतिरुचिकृतिसिद्धिशांतिक्षान्तिभ्रांत्यालिशक्तिप्रभृतयः । एवं धेनु-

तनुरज्जुप्रभृतयः स्त्रीलिङ्गाः । धेनुः, धेनू, धेनवः । धेनुम्, धेनू, धेनूः । धेन्वा, धेनुभ्यां, धेनुभिः । धेन्वै धेनवे, धेनुभ्यां, धेनुभ्यः । धेन्वाःधेनोः, धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः, धेन्वोः, धेनूनाम् । धेन्वां धेनौ, धेन्वोः, धेनुषु ॥ १० ॥

ईकारान्तः स्त्रीलिंगो नदीशब्दः ।

## हसेपस्सेर्लोपः ॥ ११ ॥

हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । नदी, नद्यौ, नद्यः ॥ ११ ॥

## धौ ह्रस्वः ॥ १२ ॥

इवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि, हे नद्यौ, हे नद्यः । नदीम्, नद्यौ, नदीः । नद्या, नदीभ्यां, नदीभिः ॥ १२ ॥

## ङिन्तामट् ॥ १३ ॥

स्त्रियामीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति॥ नद्यै, नदीभ्यां, नदीभ्यः। नद्याः नदीभ्यां नदीभ्यः। नद्याः नद्योः नदीनाम्। नद्यां नद्योः नदीषु। एवं गौरीसरस्वतीब्रह्माणीकुमारीकिशोरीकलभीपार्वतीभवानीप्रभृतयः॥ लक्ष्मीशब्दस्येबन्तत्वाभावात् सेर्लोपो नास्ति। लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः। शेषं नदीवत्। हे लक्ष्मि। स्त्रीशब्दस्य ईबन्तत्वात्सेर्लोपोऽस्ति। स्त्री॥१३॥

स्त्रीभ्रुवोः॥ १४॥

स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे। स्त्रियौ स्त्रियः। हे स्त्रि हे स्त्रियौ हे स्त्रियः॥१४॥

वाम्शसि॥ १५॥

स्त्रीशब्दस्य अमि शसि च परे वा इयादेशो भवति। स्त्रियं स्त्रीं स्त्रियौ स्त्रीः स्त्रियः। स्त्रिया स्त्रीभ्यां स्त्रीभिः। स्त्रीषु। शेषं नदीवत्। श्रीः श्रियौ श्रियः। श्रियं श्रियौ श्रियः। श्रिया श्रीभ्यां श्रीभिः॥१५॥

वेयुवः ॥ १६ ॥

इयुवन्तात् स्त्रियां वर्त्तमानात् ङितां वचनानां वाडागमो भवति स्त्रियास्तु नित्यम् । श्रियै श्रिये, श्रीभ्यां, श्रीभ्यः । श्रियः श्रियाः, श्रीभ्यां, श्रीभ्यः। श्रियः श्रियाः, श्रियोः ।

श्रियादीनां वामो नुड्वक्तव्यः ॥ ❀ ॥

श्रियां श्रीणाम् । ङौ परेऽडागमाभावे आमोप्यभावः । श्रियां श्रियि, श्रियोः, श्रीषु । हे श्रीः । एवं ह्रीधीप्रभृतयोप्यनीबन्ताः । एवं भूशब्दो भ्रूशब्दवत् । वधूजम्ब्वादीनां नदीशब्दवत् । वधूः । वध्वौ, वध्वः । वधूं ,वध्वौ, वधूः । जम्बूः, जम्ब्वौ जम्ब्वः । हे जम्बु, हे जम्ब्वौ, हे जम्ब्वः। ऋकारान्तो मातृशब्दः । माता, मातरौ, मातरः । मातरं, मातरौ,मातॄः। शसीति दीर्घत्वम् । शेषं पितृवत् । रैशब्दः सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत् ॥ १६ ॥

इति स्वरान्ताः स्त्रीलिङ्गाः ।

## अथ स्वरान्ता नपुंसकलिंगाः प्रदर्श्यन्ते॥

अकारान्तो नपुंसकलिङ्गः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ।

### अतोऽम् ॥ १ ॥

अकारान्तान्नपुंसकलिंगात्परयोः स्यमोरम् भवति अधौ । अमोऽम्ग्रहणं लुग्व्यावृत्त्यर्थम् । "अम्शसोरस्य" । कुलम् ॥ १ ॥

### ईमौ ॥ २ ॥

नपुंसकलिंगात्पर औ ईकारमापद्यते । कुले॥२॥

### जश्शसोः शिः ॥ ३ ॥

नपुंसकलिंगात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ ३ ॥

गुरुः शिश्च सर्वस्य वक्तव्यः ॥ ❀ ॥ षष्ठीनिर्दिष्टस्येत्यस्यापवादः ।

### नुमयमः ॥ ४ ॥

नपुंसकस्य नुमागमो भवति शौ परे यमप्रत्याहारान्तस्य न भवति ॥ ४ ॥

मिदन्त्यात्स्वरात्परो वक्तव्यः ॥ ❀ ॥
उकार उच्चारणार्थः । मकारः स्थाननियमार्थः ।

नोपधायाः ॥ ५ ॥

नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु नामि च न त्वीति । कुलानि । हे कुल, हेकुले, हे कुलानि । पुनरपि कुलं, कुले, कुलानि । शेषं देववत् । एवं मूलफलपत्रपुष्पकुटुम्बादयः ॥ ५ ॥

श्त्वन्यादेः ॥ ६ ॥

अन्यादेर्गणात्परयोः स्यमोः श्तुर्भवति । शकारः शित्कार्यार्थः । उकार उच्चारणार्थः ॥६॥

वाऽवसाने ॥ ७ ॥

अवसाने वर्त्तमानानां झसानां जबा भवन्ति चपा वा । अन्यत् अन्यद्, अन्ये, अन्यानि । पुनरपि । अन्यत् अन्यद्, अन्ये, अन्यानि । अन्यतरत् अन्यतरद्, अन्यतरे, अन्यतराणि॥

॥२॥इतरद् इतरद्, इतरे, इतराणि॥२॥ कतरत् कतरद्, कतरे, कतराणि ॥२॥ कतमत् कतमद्, कतमे, कतमानि ॥ २ ॥ शेषं सर्वशब्दवत्॥एते चान्यादयः ॥ ७ ॥

इकारान्तोऽस्थिशब्दः ।

नपुंसकात्स्यमोर्लुक् ॥ ८ ॥

नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ॥ ८ ॥

स्वृणाम् ॥ ९ ॥

इश्च उश्च आ च स्वरः तेषां स्वृणाम् । नपुंसके धौ वा गुणो भवति।हेअस्थे, हेअस्थि,हेअस्थिनी, हे अस्थीनि ॥ ९ ॥

उक्तं हि ।

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ॥ माध्यन्दिनिर्वष्टि गुणं त्विगंते नपुंसके व्याघ्रपदां वरिष्ठः ॥ १ ॥"

## नाम्निनः स्वरे ॥ १० ॥

नाम्यन्तस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे। "ईमो"॥अस्थिनी ॥ १० ॥

## अच्चास्थ्यां शसादौ ॥ ११ ॥

अस्थ्यादीनां नुमागमो भवति ईकारस्य चाकारो भवति शसादौ स्वरे परे॥ ११ ॥

## अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ॥ १२ ॥

नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे मकारवकारान्तसंयोगादुत्तरस्य न भवति। अस्थ्ना, अस्थिभ्याम्, अस्थिभिः। अस्थ्ने, अस्थिभ्याम् अस्थिभ्यः। अस्थ्नः, अस्थिभ्याम्, अस्थिभ्यः, अस्थ्नः, अस्थ्नोः, अस्थ्नाम् १२॥

## वेङ्ग्योः ॥ १३ ॥

ईङ्योः परयोर्वा अकारस्य लोपो भवति अस्थ्नि अस्थनि, अस्थ्नोः, अस्थिषु। एवं दधि

सक्थिअक्षिशब्दाः। दध्ना, दधिभ्यां, दधिभिः। सक्थि, सक्थिनी, सक्थीनि ॥ २ ॥ सक्थ्ना, सक्थिभ्याम् सक्थिभिः। अक्ष्णा, अक्षिभ्याम्, अक्षिभिः इति। पूर्ववत् प्रक्रिया ॥ वारि वारिणी वारीणि ॥

## नपुंसकस्य ह्रस्वः ॥ १४ ॥

नपुंसकस्य ह्रस्वो भवति। "नपुंसकात् स्यमोर्लुक्" ग्रामणि। "नामिनः स्वरे"। "ईमौ"। ग्रामणिनी ग्रामणीनि। "नामिनः स्वरे" "नोपधायाः" इति दीर्घः ॥ १४ ॥

## टादावुक्तपुंस्कं पुंवद्वा ॥ १५ ॥

उक्तपुंस्कं नाम्यन्तं नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति। "नामिनः स्वरे" ग्रामणिना ग्रामण्या, ग्रामणिभ्यां, ग्रामणिभिः। ग्रामण्ये ग्रामणिने, ग्रामणिभ्यां, ग्रामणिभ्यः, ग्रामण्यः ग्रामणिनः, ग्रामणिभ्यां, ग्रामणिभ्यः, ग्रामण्यः ग्रा-

---

१ "एक एव हि यः शब्दस्त्रिषु लिङ्गेषु जायते। एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥ १ ॥"

मणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्याम् (नुमन्तस्यामि दीर्घः) "नामिनः स्वरे" । ग्रामणीनाम् । "आम्ङेः" । ग्रामण्यां ग्रामणिनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु। हे ग्रामणि हे ग्रामणिनी हे ग्रामणीनि । "अतोऽम्" । सोमपं सोमपे सोमपानि २ सोमपेन सोमपाभ्यां सोमपैः। सोमपाय सोमपाभ्यां सोमपाभ्यः । इति पूर्ववत् ।

उकारान्तो मधुशब्दः । नपुंसकात्स्यमोर्लुक् । मधु । "नामिनः स्वरे" इति नुमागमः । मधुनी "जश्शसोःशिः"।'नोपधायाः।इति दीर्घः।मधूनि पुनरपि । मधु मधुनी मधूनि।"नामिनः स्वरे" । मधुना मधुभ्यां मधुभिः॥ऋकारान्तः कर्तृशब्दः। नपुंसकात् स्यमोर्लुक्। कर्तृ । "नामिनः स्वरे" । "षुनौ णोऽनन्ते" ।कर्तृणी कर्तृणि ॥ २ ॥"ऋ रम्" ।कर्त्रा कर्तृणा कर्तृभ्यां कर्तृभिः।कर्त्रे कर्तृणे कर्तृभ्यां कर्तृभ्यः । "ऋतो ङ उः"। स च ङित् ।

"ङिति टेः" कर्तुः कर्तृणः कर्तृभ्यां कर्तृभ्यः। कर्तुः कर्तृणः कर्त्रोः कर्तृणोः कर्तृणाम्। कर्तरि कर्तृणि कर्त्रोः कर्तृणोः कर्तृषु। हे कर्तः हे कर्तृ हे कर्तृणी हेकर्तॄणि। ऐकारान्तः अतिरैशब्दः। (सन्ध्यक्षराणामिदुतौ ह्रस्वादेशः) रायमतिक्रान्तमतिरि कुलम्। नावमतिक्रान्तमतिनु जलम्। उकारान्त उपगुशब्दः। उपगता गावो यस्येति तदुपगु ॥ १९ ॥

इति स्वरान्ता नपुंसकलिंगाः समाप्ताः ॥

## अथ हसान्ताः पुंलिङ्गाः प्रदर्श्यन्ते ॥

तत्र हकारान्तः पुँल्लिंगोऽनडुह् शब्दः। नामसंज्ञायां स्यादयः।

पञ्चस्वनडुह आमागमो वक्तव्यः ॥ ❀ ॥

### सावनडुहः ॥ १ ॥

अनडुच्छब्दस्य सौ परे नुमागमो भवति ॥ १ ॥

### संयोगान्तस्य लोपः ॥ २ ॥

संयोगान्तस्य लोपो भवति रसे पदान्ते च।

(रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य)॥२॥

हसेपः सेर्लोपः ॥ ३ ॥

हसान्तादीबंताच्चपरस्यसेर्लोपो भवति । 'उवम्' इति वत्वम्।लोपविधिसामर्थ्यान्न दत्वम्।अनड्वान् अनड्वाहौ अनड्वाहः।अनड्वाहम् अनड्वाहौ अनडुहः। अनडुहा ॥ ३ ॥

वसां रसे ॥ ४ ॥

वसु स्रंसु ध्वंसु अनडुह इत्येतेषां रसे पदान्ते च दत्वं भवति। अनडुद्भ्याम् अनडुद्भिः। अनडुहे अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः अनडुद्भ्याम् अनडुद्भ्यः। अनडुहः अनडुहोः अनडुहाम्। अनडुहि अनडुहोः "खसे चपा झसानाम्"। अनडुत्सु ॥ ४ ॥

धावम् ॥ ५ ॥

अनडुच्छब्दस्य धौ परे अमागमो भवति। "सावनडुहः"। "उवम्" (स्वरहीनंपरेण संयोज्य-

म्) हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः॥इत्यादि।
गोदुह्शब्दस्य भेदः ॥ ५ ॥

दादेर्घः ॥ ६ ॥

दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च।गोदुघ् सि इति स्थिते॥६॥

आदिजबानां झभान्तस्य झभाः स्ध्वोः ॥ ७ ॥

धातोर्झभान्तस्याऽऽदौ वर्त्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥ ७ ॥

वावसाने ॥ ८ ॥

अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा। गोधुक् गोधुग् गोदुहौ गोदुहः। गोदुहं गोदुहौ गोदुहः। गोदुहा। भकारादौ "दादेर्घः" इति घत्वे आदिजबस्य दकारस्य झभे धकारे च कृते 'झबे जबाः' गोधुग्भ्यां गोधुग्भिः। "खसेचपा

झसानाम्" । "क्रिलात् षः सः कृतस्य" इति षत्वम्। ( कष्संयोगे क्षः )। गोधुक्षु । हे गोधुक् हे गोधुग्, हे गोदुहौ, हे गोदुहः ॥ ८ ॥

मधुलिट्छब्दस्य विशेषः ।

## हो ढः ॥ ९ ॥

धातोर्हकारस्य ढत्वं भवति धतोर्झसे परे नाम्नश्च रसे पदान्ते च । "वावसाने" मधुलिट् मधुलिड्, मधुलिहौ, मधुलिहः । हे मधुलिट् हे मधुलिड्, हे मधुलिहौ, हे मधुलिहः । मधुलिहं, मधुलिहौ, मधुलिहः। मधुलिहा, मधुलिड्भ्यां- मधुलिड्भिः ॥ ९ ॥

तुराषाट्शब्दस्य भेदः ।

## सहेः षः साढि ॥ १० ॥

साढि रूपे सति सहेर्धातोस्सकारस्य षकारा- देशो भवति । तुराषाट् तुराषाड् इत्यादि ॥१०॥

## दुहादीनां घत्वढत्वे वा ॥ ११ ॥

दुहादीनां धातूनां घत्वढत्वे वा भवतः रसे

पदान्ते च। मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ, मित्रद्रुहः। मित्रद्रुहं, मित्रद्रुहौ, मित्रद्रुहः। मित्रद्रुहा "झबे जबाः"। मित्रध्रुग्भ्याम् मित्रध्रुड्भ्यामित्यादि। एवं तत्त्वमुट्-स्नुट्शब्दौ॥११॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः॥

## चतुराम् शौ च ॥ १२ ॥

चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च। चत्वारः चतुरः, चतुर्भिः, चतुर्भ्यः ॥१२॥

## रः संख्यायाः ॥ १३ ॥

रेफान्तसंख्यायाः परस्यामो नुडागमो भवति णत्वं द्वित्वम्। चतुर्णां, चतुर्षु ॥ १३ ॥

नकारान्तो राजन् शब्दः। "नोपधायाः" इति पञ्चसु दीर्घः॥

## नाम्नो नो लोपशधौ ॥ १४ ॥

नाम्नो नकारस्यानागमजस्य लोपश्च भवति रसे पदान्ते चाधौ। राजा, राजानौ, राजानः। राजानं,

राजानौ। "अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ"। "स्तोः श्चुभिः श्चुः" इति चुत्वेन ञकारः ॥१४॥

## जञोर्ज्ञः ॥ १५ ॥

जकारञकारयोर्योगे ज्ञो भवति। राज्ञः। राज्ञा। राज्ञे, राजभ्याम्, राजभ्यः। "वेङ्योः"। राज्ञि-राजनि, राज्ञोः, राजसु इत्यादि। एवं यज्वन्आ-त्मन्सुधर्मन्प्रभृतयः। अम्वयुक्तादिति विशेष-णादल्लोपो नास्ति। यज्वनः। यज्वना इत्यादि। श्वन्-युवन्-मघवन्-शब्दानां पञ्चसु राजञ्छब्द-वत्प्रक्रिया। शसादौ तु विशेषः ॥ १५ ॥

## श्वादेर्व उः ॥ १६ ॥

श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च। शुनः। शुना, श्वभ्याम्, श्व-भिरित्यादि। युवञ्छब्दस्य वकारस्योत्वे कृते

सवर्णे दीर्घः । यूनः । यूना, युवभ्याम्. युवभिः इत्यादि ॥ १६ ॥ पथिन्छब्दस्य भेदः ।

इतोऽत्पञ्चसु ॥ १७ ॥

पथ्यादीनामिकारस्याकारादेशो भवति पञ्चसु परेषु ॥ १७ ॥

थो न्तुट् ॥ १८ ॥

पथ्यादीनां थकारस्य न्तुडागमो भवति पञ्चसु स्यादिषु परेषु । पन्थन् सि इति स्थिते ॥१८॥

आ सौ ॥ १९ ॥

पथ्यादीनां टेरात्वं भवति सौ परे । पन्थाः, पन्थानौ, पन्थानः । आत्वविधानान्न सेर्लोपः । हे पन्थाः । पन्थानम्, पंथानौ ॥ १९॥

पथां टेः ॥ २० ॥

पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे ।

पथः। पथा, पथिभ्याम्, पथिभिः इत्यादि। एवं मथिन् ऋभुक्षिन्शब्दौ॥ २०॥ दण्डिञ्छब्दस्य भेदः ।

## इनां शौ सौ ॥ २१ ॥

इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति। दण्डी, दण्डिनौ, दण्डिनः। हे दण्डिन्। दण्डिनम्, दण्डिनौ, दण्डिनः। दण्डिना, दण्डिभ्याम्, दण्डिभिः इत्यादि। ब्रह्महा, ब्रह्महणौ, ब्रह्महणः । हे ब्रह्महन्, हे ब्रह्महणौ, हे ब्रह्महणः। ब्रह्महणम्, ब्रह्महणौ । शसादौ अकारलोपः ॥ २१ ॥

## हनो घ्न ॥ २२॥

हन्तेर्धातोर्हकारस्य घकारो भवति नकारे ञ्णिति च परे । घसंयोगो णत्वनिषेधार्थः। ब्रह्मघ्नः। ब्रह्मघ्ना, ब्रह्महभ्याम्, ब्रह्महभिः इत्यादि । पूषा

पूषणौ, पूषणः । हे पूषन्, हे पूषणौ, हे पूषणः । पूषणम्, पूषणौ ॥ २२ ॥

षणोः ष्णः ॥ २३ ॥

षकारणकारसंयोगे ष्णो भवति शसादौ स्वरे परे। (पूषन्क्षुन्द्रस्य शसादौ स्वरे परे वा टेर्लोपः ) पूष्णः।पूष्णा, पूषभ्याम्, पूषभिः । पूष्णे।ङौ टिलोपो वेति केचित्।पूष्णि-पूषणि, पूषि, पूष्णोः, पूषसु। अर्य्यम्णः।अर्य्यम्णा, अर्य्यमभ्याम्।इत्यादि॥२३। संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः । पञ्चन् जस् इति स्थिते ॥

जश्शसोर्लुक् ॥ २४ ॥

षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुक् भवति। ( प्रत्ययलोपे प्रत्ययलक्षणम् )(लुकि न तन्निमित्तम्)पञ्च।पञ्च। पञ्चभिः।पञ्चभ्यः॥२४॥

## ष्णः ॥ २५ ॥

षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति। 'नोपधायाः' इति दीर्घः। 'नाम्नो नो लोपशधौ' पञ्चानाम्। पञ्चसु। एवं सप्तन्-नवन्-दशन्-प्रभृतयः ॥ २५ ॥

## अष्टनो डौ वा ॥ २६ ॥

अष्टञ्छब्दात्परयोर्जश्शसोर्वा डौ भवति। डित्त्वाट्टिलोपः। अष्टौ-अष्ट। अष्टौ-अष्ट ॥२६॥

## वासु ॥ २७ ॥

वा आ आसु। अष्टन आसु परासु विभक्तिषु वा आत्वं भवति। अष्टभिः-अष्टाभिः। अष्टभ्यः-अष्टाभ्यः २। अष्टानाम्। अष्टसु-अष्टासु ॥ २७ ॥

### मकारान्त इदम्शब्दः।

## इदमोऽयं पुंसि ॥ २८ ॥

इदम्शब्दस्य पुंसि विषये अयमादेशो भवति

सिसहितस्य। अयम्। द्विवचनादौ "त्यदादेष्टेरः स्यादौ" इत्यकारः। इद औ इति स्थिते॥२८॥

## दस्य मः॥ २९॥

त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे। इमौ, इमे। सर्वादित्वाज्जसी। त्यदादीनां घेरभावः। इमम्, इमौ, इमान्॥ २९॥

## अन् टौसोः॥ ३०॥

इदमोऽनादेशो भवति टौसोः परयोः अनेन॥३०॥

## स्भ्यः॥ ३१॥

इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य। "अद्भिः" इत्यात्त्वम्। आभ्याम्॥३१॥

## भिस् भिस्॥ ३२॥

इदमदसोर्भिस् भिसेव भवति। न भकारस्याकारः। "एस्भि बहुत्वे" एभिः। अस्मै, आभ्याम्,

एभ्यः।अस्मात्,आभ्याम्,एभ्यः।अस्य,अनयोः,
एषाम्।अस्मिन्,अनयोः,एषु।किंशब्दस्य "त्यदादेष्टेरः स्यादौ" इति सर्वत्राकारे कृते सर्वशब्दवद्रूपम्।कः,कौ, के। कम्,कौ, कान् इत्यादि। धकारान्तस्तत्त्वबुध् शब्दः।तस्य रसे पदान्ते च "आदिजबानाम्" इति भकारः। "वावसाने"।तत्त्वभुत्-तत्त्वभुद्,तत्त्वबुधौ,तत्त्वबुधः। हे तत्त्वभुत्-हे तत्त्वभुद्।तत्त्वबुधम्,तत्त्वबुधौ,तत्त्वबुधः। तत्त्वबुधा, तत्त्वभुद्भ्यां,तत्त्वभुद्भिः इत्यादि ॥ ३२ ॥

जकारान्तः सम्राज् शब्दः ।

## छशषराजादेः षः ॥ ३३ ॥

छकारान्तस्य शकारान्तस्य षकारान्तस्य च राज् यज् सृज् मृज् भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ ३३ ॥

षो डः ॥ ३४ ॥

षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । "वावसाने" टकारः डकारश्च। सम्राट्-सम्राड्, सम्राजौ, सम्राजः । सम्राजम्, सम्राजौ, सम्राजः । सम्राजा, सम्राड्भ्याम्, सम्राड्भिः । इत्यादि । एवं विराजादयः॥दकारान्तास्त्यद् तद् यद् एतच्छब्दास्तेषां "त्यदादेष्टेरः स्यादौ" इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥ ३४ ॥

स्तः ॥ ३५ ॥

त्यदादेस्तकारस्य सौ परे सत्वं भवति। स्यः, त्यौ, त्ये।त्यम्, त्यौ, त्यान् । सः, तौ, ते । तम्, तौ, तान् । यः, यौ, ये । यम्, यौ, यान् । एषः, एतौ, एते । एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः ॥ * ॥ (उक्तस्य पुनरुक्तमन्वादेशः)

यथानेन बालेन व्याकरणमधीतमेनं छन्दोऽध्यापय। एतम्-एनम्, एतौ-एनौ, एतान्-एनान्। एतेन-एनेन, एताभ्याम्, एतैः। एतयोः-एनयोः, एतेषाम्। एतस्मिन्, एतयोः-एनयोः, एतेषु। छकारान्तस्तत्त्वप्राछ्शब्दः। तत्त्वप्राट्-तत्त्वप्राड्, तत्त्वप्राच्छौ, तत्त्वप्राच्छः इत्यादि ॥ ३५ ॥

## नो लोपः ॥ ३६ ॥

धातोर्हसान्तस्योपधाभूतस्य लोपो भवति। अञ्चेः पञ्चसु नुम् वक्तव्यः ॥ ❀ ॥

प्रत्यन् च इति स्थिते "स्तोः श्चुभिः श्चुः" इति चुत्वेनात्र ञकारः। 'संयोगान्तस्य लोपः'॥३६॥

## चोः कुः ॥ ३७ ॥

चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन। प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। प्रत्यञ्चम्, प्रत्यञ्चौ ॥ ३७ ॥

## अञ्चेरलोपो दीर्घश्च ॥ ३८ ॥

अञ्चेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे तद्धिते ईपीकारे च ।(निमित्ताभावे नैमित्तिकस्याप्यभावः) प्रतीचः।प्रतीचा, प्रत्यग्भ्याम् ,प्रत्यग्भिः। प्रत्यक्षु। एवंतिर्य्यक्प्रभृतयः। तिर्य्यङ्,तिर्य्यञ्चौ, तिर्य्यञ्चः। तिर्य्यञ्चम्, तिर्य्यञ्चौ ॥ ३८ ॥

## तिरश्चादयः ॥ ३९ ॥

तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा, तिर्य्यग्भ्याम् , तिर्य्यग्भिः । तिर्यक्षु । उदक्शब्दस्य उदीच इति निपात्यते शसादौ स्वरे परे। उदीचः। उदीचा इत्यादि । एवमग्निचित् ॥ ३९ ॥

तकारान्त उकारानुबन्धो महच्छब्दः ।

## ह्वतो नुम् ॥ ४० ॥

उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पंचसु परेषु ॥ ४० ॥

## न्सम्महतोऽधौ दीर्घः शौ च ॥ ४१ ॥

न्सन्तस्याप्शब्दस्य महच्छब्दस्य च उपधाया दीर्घो भवति पंचसु धिवर्जितेषु शौ च परे । महान्, महान्तौ, महान्तः । महान्तम्, महान्तौ, महतः । महता, महद्भ्याम्, महद्भिः । हे महान्, इत्यादि ॥ ४१ ॥

उकारानुबन्धो भवच्छब्दः ।

## अत्वसोः सौ ॥ ४२ ॥

अत्वन्तस्यासंतस्य चोपधाया दीर्घो भवति धिवर्जिते सौ परे। भवान्, भवन्तौ, भवन्तः। इत्यादि ॥ ऋकारानुबन्धस्य भवच्छब्दस्य नुमागम

एव न दीर्घः । भवन्, भवन्तौ, भवन्तः इत्यादि ।
पठन्, पठन्तौ, पठन्तः । पठन्तम्, पठन्तौ ।
पचन्, पचन्तौ, पचन्तः इत्यादि ।

शकारान्तो विश् शब्दः । छशषराजादिना षत्वम् । 'षो डः' इति षकारस्य डत्वं च । 'वावसाने' चपा जबाश्च। विट्-विड्, विशौ, विशः ।

षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः। "जश्शसोर्लुक्"। "षोडः" । षट्-षड् । षड्भिः । षड्भ्यः२॥ "ष्णः" इति नुडागमः । षड्नाम् इति स्थिते ॥ ४२ ॥

## डणः ॥ ४३ ॥

संख्यासम्बंधिनो डकारस्य णत्वम्भवति नामि परे। "ष्टुभिः ष्टुः" । षण्णाम् । षट्सु। क्वचिदपदान्ते पदान्तताश्रयणीया ॥ ४३ ॥

दोषां रः ॥ ४४ ॥

दोष् सजुष् आशिष् हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च। दोः,दोषौ,दोषः। दोषम्, दोषौ ॥ दोष्शब्दस्य शसादौ स्वरे परे नान्ततावा वक्तव्या ❋।दोषः-दोष्णः।दोषा-दोष्णा, दोर्भ्याम्,दोर्भिः इत्यादि। सजूः,सजुषौ, सजुषः।

सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः ❋॥ सजूर्भ्यामित्यादि ॥ ४४ ॥

पुंसोऽसुङ् ॥ ४५ ॥

पुंस्शब्दस्य पञ्चसु परेषु असुङादेशो भवति ङकारोऽन्त्यादेशार्थः ॥ ४५ ॥

( स्वरे मः ॥ ४६ ॥

अनुस्वारस्य मकारो भवति )। पुम् अस् इति स्थिते।'वृतो नुम्'। 'न्सम्महतोऽधौ दीर्घः शौ च'

"संयोगान्तस्य लोपः"। पुमान्, पुमांसौ, पुमांसः। पुमांसम्, पुमांसौ, पुंसः। पुंसा, पुंभ्याम्, पुंभिः। हे पुमन् ॥ ४६ ॥

असंभवे पुंसः कक् सौ ॥ ४७ ॥

वेदान्तैकवेद्यस्यात्मनो बहुत्वासम्भवेऽर्थे वाच्ये सति पुंस्शब्दस्य सुपि परे कगागमो भवति ४७

स्कोराद्योश्च ॥ ४८ ॥

संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। पुंक्षु। एवं विद्वच्छब्दः। विद्वान्, विद्वांसौ, विद्वांसः। विद्वांसम्, विद्वांसौ ॥ ४८ ॥

वसोर्व उः ॥ ४९ ॥

वसोः सम्बंधिनो वकारस्य उत्वं भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च। विदुषः। विदुषा। "वसां रसे" विद्वद्भ्याम्, विद्वद्भिः। विद्व-

त्सु इत्यादि । सुवचश्शब्दस्य "अत्वसोः सौ" इति दीर्घः।सुवचाः,सुवचसौ,सुवचसः।हे सुवचः। सुवचसम्,सुवचसौ,सुवचसः । सुवचसा,सुवचोभ्याम्, सुवचोभिः ॥४९॥ उशनश्शब्दस्य भेदः।

## उशनसाम् ॥ ५० ॥

उशनस् पुरुदंशस् अनेहस् इत्येतेषां सेरधेर्डा भवति। डकारष्टिलोपार्थः । उशना, उशनसौ, उशनसः॥उशनसो धौ सान्तता नान्तताअदन्तता वा वक्तव्या॥ ❀ ॥हे उशनः-हे उशनन्-हे उशन ॥५०॥ अदश्शब्दस्य विशेषः । त्यदादेष्टेरिति सर्वत्राकारः । अद सि इति स्थिते ।

## सौ सः ॥ ५१ ॥

अदसो दकारस्य सौ परे सत्वं भवति॥५१॥

## सेरौ ॥ ५२ ॥

अदसः सेरौ भवति । असौ । द्विवचने अदस् औ इति स्थिते । "दस्य मः" ॥ ५२ ॥

## माद्दू ॥ ५३ ॥

उश्च ऊश्च ऊ । अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारो भवति। दीर्घस्य च दीर्घ ऊकारो भवति ॥ अमू । बहुवचने सर्वादित्वाज्जसी। अदई अमे इति स्थिते ॥ ५३ ॥

## एरी बहुत्वे ॥ ५४ ॥

बहुत्वे सत्यदस एकारस्य ईकारो भवति। अमी । अमुम्, अमू, अमून् । मत्वे उत्वे च कृते "टा नास्त्रियाम्" । अमुना । द्विवचने "अद्भि" इत्यात्वम् । पश्चादुकारः । अमूभ्याम् ।

"भिसभिस्"। अमीभिः । अमुष्मै, अमूभ्याम् अमीभ्यः । अमुष्मात्, अमूभ्याम्, अमीभ्यः । अमुष्य । ओसि एत्वे अयादेशे च कृते पश्चादुकारः । अमुयोः, अमीषाम् । अमुष्मिन्, अमुयोः, अमीषु ॥ ५४ ॥

## सामान्ये अदसः कः स्यादिवञ्च ॥ ५५ ॥

अमुकः, अमुकौ, अमुके ॥

इति हसान्ताः पुँल्लिङ्गाः समाप्ताः ॥

# अथ हसान्ताः स्त्रीलिंगाः ।

तत्र हकारान्त उपानह्शब्दः ।

## नहो धः ॥ १ ॥

नहो हकारस्य धकारादेशो भवति रसे पदान्ते च । "वावसाने" धस्य दत्वं तत्वम् । उपानत्-उपानद्, उपानहौ, उपानहः । हे उपानत्-हे उपानद् । उपानहम्, उपानहौ, उपानहः । उपानहा, उपानद्भ्याम्, उपानद्भिः । इत्यादि ॥ १ ॥

वकारांतो दिव्शब्दः ।

## दिव औ ॥ २ ॥

दिवो वकारस्य औकारादेशो भवति सौ परे । द्यौः, दिवौ, दिवः । हे द्यौः ॥ २ ॥

वामि ॥ ३ ॥

दिवो वकारस्य अमि परे वा आत्वं भवति। द्याम्-दिवम्, दिवौ, दिवः। दिवा ॥ ३ ॥

ऊ रसे ॥ ४ ॥

दिवो वकारस्य रसे परे उकारो भवति। द्युभ्याम्, द्युभिः। द्युषु इत्यादि ॥ ४ ॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥

त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥ ५ ॥

स्त्रियां वर्तमानयोः त्रिचतुर्शब्दयोः तिसृचतसृ इत्येतावादेशौ भवतः विभक्तौ परतः। ऋकारश्च ऋकारवत्, ततः "स्तुरार्" इत्यार्न भवति। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः ॥ ५ ॥

न तिसृ चतसृ छन्दसि वा ॥ ६ ॥

तिसृ चतसृ इत्येतयोर्दीर्घो न भवति नामि

परे । तिसृणाम् । छन्दसि तु वा भवति।तिसॄणाम् ।
तिसृषु । एवं चतसृ ॥ ६ ॥

गिर्शब्दस्य भेदः ।

र्वोर्वि हसे ॥ ७ ॥

धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्ह-
सपरयोः पदान्ते च । गीः, गिरौ, गिरः । हे गीः ।
गिरम्, गिरौ, गिरः । गिरा, गीर्भ्याम्, गीर्भिः ।
गीर्षु । एवं धूः, धुरौ, धुरः । हे धूः । पूः, पुरौ,
पुरः । हे पूः । पुरा, पूर्भ्याम्, पूर्भिः । पूर्षु ।

धकारान्तः समिच्छब्दः ।

समित्-समिद्, समिधौ । हे समित्-हे स-
मिद् । समिद्भ्याम्, समिद्भिः । समित्सु ।

भकारान्तः ककुभ्शब्दः ।

ककुप्-ककुब्, ककुभौ, ककुभः । हे ककुप्-हे
ककुब्इत्यादि।दकारान्तास्त्यदादयस्तेषां त्यदा-

देष्टेरीति सर्व्वत्राकारः। "आबतः स्त्रियाम्" इत्याप्। स्या, स्ये, स्याः। सा, ते, ताः। या, ये, याः। एषा, एते, एताः। अन्वादेशे। एताम्-एनाम्, एते-एने, एताः-एनाः। एवं किम्। का, के, काः॥ ७॥

## इयं स्त्रियाम्॥ ८॥

इदंशब्दस्य स्त्रियामियं भवति सौ परे सिसहितस्य। इयम्, इमे, इमाः। इमाम्, इमे, इमाः। अनया, आभ्याम्, आभिः। अस्यै, आभ्याम्, आभ्यः इत्यादि।

### चकारान्तस्त्वच्शब्दः।

"चोः कुः" इति कुत्वम्। त्वक्-त्वग्, त्वचौ, त्वचः। त्वग्भ्याम्। त्वक्षु। हे त्वक्-हे त्वग् एवं-मृग्वाक्प्रभृतयः।

अप्शब्दो नित्यं बहुवचनान्तः।

अप् जस् इति स्थिते। "न्सम्महत" इति दीर्घः आपः। द्वितीयाबहुवचने पंचसु इति विशेषणान्न दीर्घः। अपः ॥ ८ ॥

## भिदपाम् ॥ ९ ॥

अबादीनां भकारे परे दत्वं भवति। अद्भिः। अद्भ्यः। अपाम्। अप्सु ॥ ९ ॥

शकारान्तो दिश्शब्दः।

## दिशां कः ॥ १० ॥

दिश्दृश्स्पृशइत्यादीनां रसे पदान्ते च कत्वं भवति। दिक्-दिग्, दिशौ, दिशः। हे दिक्-हे दिग्। दिशम्, दिशौ, दिशः। दिशा, दिग्भ्याम्, दिग्भिः। इत्यादि।

## षकारान्तस्त्विष्शब्दः ।

"षो डः" इति डत्वम् "वावसाने" टकारः। त्विट्-त्विड्, त्विषौ, त्विषः । त्विषम् । त्विषा, त्विड्भ्याम्, त्विड्भिः इत्यादि। आशीश्शब्दस्य सजूष्शब्दवद्रूपं ज्ञेयम्।आशीः,आशिषौ, आशिषः।आशीर्भ्याम्।आशीष्षु। हे आशीः । स्त्रीलिंगस्यादश्शब्दस्य सौ न विशेषः।द्विवचनादौ टेरत्वे मत्वे च कृतेअनन्तरम् "आबतःस्त्रियाम्" इत्याप् दीर्घत्वम् । विभक्तिकार्यं पश्चात् "मादू" इति ह्रस्वस्य दीर्घस्य उकार ऊकारश्च । असौ, अमू, अमूः । अमुम्, अमू, अमूः।अमुया,अमूभ्याम् । अमूभिः। अमुष्यै, अमूभ्याम्,अमूभ्यः।अमुष्याः अमूभ्याम्,अमूभ्यः।अमुष्याः,अमुयोः,अमूषाम् अमुष्याम्, अमुयोः, अमूषु ॥ १० ॥

॥ इति हसान्ताः स्त्रीलिंगाः समाप्ताः ॥

# अथ हसान्ता नपुंसकलिंगाः प्रदर्श्यन्ते ।

रेफान्तो वार्शब्दः ।

## नपुंसकात्स्यमोर्लुक् ॥ १ ॥

वाः, वारी, वारि । २। "अयम" इति विशेषणान्नुम् न भवति । वारा, वार्भ्याम्, वार्भिः । वारे । इत्यादि । चतुर्शब्दे " चतुराम् शौ च" इत्याम् । चत्वारि । चत्वारि । चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः । चतुर्णाम् । चतुर्षु ॥ १ ॥

नकारान्तोऽहन्शब्दः ।

## अह्नः सः ॥ २ ॥

अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते चास्रोर्विसर्गः।अहः।"ईमौ"। "वेङ्योः" अह्नी-अहनी, अहानि । अह्ना, अहोभ्याम्,

अह्नोभिः। अह्ने, अह्नोभ्याम्, अह्नोभ्यः। अह्नः, अह्नोः, अह्नाम्। अह्नि, अहनि, अह्नोः, अहस्सु। (ब्रह्मन्शब्दस्य रसे पदान्ते च नस्य लोपो वक्तव्यः) ब्रह्म, ब्रह्मणी, ब्रह्माणि। पुनः। ब्रह्म, ब्रह्मणी, ब्रह्माणि। ब्रह्मणा, ब्रह्मभ्याम्, ब्रह्मभिः। इत्यादि। (सम्बोधने धौ नपुंसके नलोपो वा वक्तव्यः)॥ हे ब्रह्म-हे ब्रह्मन्। एवं चर्मवर्मशर्मकर्मव्योमदामनामप्रभृतयः। नान्तादन्ताच्छंदसि ङिश्योर्लोपो वा वक्तव्यः ❀

छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ ॥ ❀ ॥

परमे व्योमन्, सर्व्वा भूतानि। त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति। स्यादाविति विशेषणात्। द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयम्। त्यत्, त्ये, त्यानि। पुनः। त्यत्, त्ये, त्यानि। त्येन, त्याभ्याम्, त्यैः। इत्यादि। एवं तद्, ते, तानि। २। यत्, ये, यानि। २। एतद्

एते, एतानि । २। किम्,के, कानि । २ ।इदम्, इमे, इमानि । २। तृतीयादौ सर्वत्र पुंवत् ।

चकारान्तः प्रत्यक्शब्दः ।

प्रत्यक्-प्रत्यग् । "अच्चेरलोपो दीर्घश्च" । प्रतीची । "नुमयमः" प्रत्यञ्चि ।

तकारान्तो जगच्छब्दः ।

जगत्,जगती,जगन्ति।जगद्भ्याम्,जगद्भिः।इत्यादि।महच्छब्दे तु"न्सम्महत"इति सिविषये दीर्घो न।महत्,महती,महान्ति।२। इत्यादि। षकारान्तो हविश्शब्दः । सजुष्च । हविः,हविषी,हवींषि ।२। इत्यादि।सजूः,सजुषी, सजूंषि।२।एवं सकारान्ताः पयस्तेजोवर्चस्प्रभृतयः।पयः,पयसी,पयांसि ।२। पयसा,पयोभ्याम् इत्यादि।अदश्शब्दस्य स्यमोर्लुकि कृते"स्रोर्विसर्गः"द्विवचनादौ टेरत्वे कृते मत्वोत्वे।अदः,अमू,अमूनि।२।अमुना,अमूभ्याम्,

असीभिः। अमुष्मै, अमूभ्याम्, अमीभ्यः। अमुष्मात्। अमुष्य, अमुयोः, अमीषाम्। अमुष्मिन्, अमुयोः, अमीषु। शेषं पुंल्लिंगवत् ॥ २ ॥

इति हसान्ता नपुंसकलिंगाः ॥

अथ युष्मदस्मदोः स्वरूपं निरूप्यते॥ तयोश्च वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु समानं रूपम्।

## त्वमहं सिना ॥ १ ॥

युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतः यथासंख्येन। त्वम् अहम् ॥ १ ॥

## युवावौ द्विवचने ॥ २ ॥

युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः॥ २॥

## आमौ ॥ ३ ॥

युष्मदस्मदोः पर औ आम् भवति। युवाम् आवाम्॥ ३ ॥

## यूयं वयं जसा ॥ ४ ॥

जसा सहितयोर्युष्मदस्मदोर्यूयं वयम् इत्येतावादेशौ भवतः। यूयम् वयम् ॥ ४ ॥

## त्वन्मदेकत्वे ॥ ५ ॥

त्वत् मत् इत्येतावादेशौ भवतः एकत्वे गम्यमाने। एकत्वं नाम एकार्थवाचित्वं न त्वेकवचनम्। तेन त्वत्पुत्रो मत्पुत्र इत्यादौ त्वन्मदादेशौ भवत एव ॥ ५ ॥

## आम्स्भौ ॥ ६ ॥

युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे। त्वाम् माम्। युवाम् आवाम्। त्यदादेष्टेरत्वे कृते शसीति दीर्घत्वम्।

शसो नो वक्तव्यः॥ ❀ ॥

युष्मान् अस्मान्। त्वन्मदादेशे कृते ॥ ६ ॥

## ए टाङ्योः ॥ ७ ॥

युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः । अयादेशः । त्वया मया । युवाभ्याम् आवाभ्याम् । युष्माभिः अस्माभिः ॥ ७ ॥

## तुभ्यं मह्यं ङया ॥ ८ ॥

ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमित्येतावादेशौ भवतः । तुभ्यम् मह्यम् । युवाभ्याम् आवाभ्याम् ॥ ८ ॥

## भ्यस् शभ्यम् ॥ ९ ॥

युष्मदस्मद्भ्यां परो भ्यसश्भ्यं भवति । शकारो भकारादित्वव्यावृत्त्यर्थः तेनात्वैत्वे न भवतः युष्मभ्यम् अस्मभ्यम् ॥ ९ ॥

## ङसिभ्यसोः श्तुः ॥ १० ॥

पञ्चम्या ङसिभ्यसोः श्तुर्भवति । शकारः सर्वा-

देशार्थः । त्वत् मत् । युवाभ्याम् आवाभ्याम् । युष्मत् अस्मत् ॥ १० ॥

तव मम ङसा ॥ ११ ॥

ङसा सहितयोर्युष्मदस्मदोस्तवमम इत्येतावादेशौ भवतः । तव मम । युवयोः आवयोः।सर्वादित्वात्सुट् ॥ ११ ॥

सामाकम् ॥ १२ ॥

युष्मदस्मद्भ्यां परस्साम् आकम् भवति।युष्माकम् अस्माकम् । त्वयि मयि। युवयोः आवयोः। युष्मासु अस्मासु ॥ १२ ॥

अथाऽनयोरादेशविशेषविधिर्निरूप्यते ॥

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वान्नौ वस्नसौ ॥ १३ ॥

तत्रैकवचनेन सह ते मे भवतः द्विवचनेन सह वां नौ बहुवचनेन सह वस्नसौ ।

"स्वामी ते स समायातः स्वामी मे सांप्रतं गतः॥
नमस्ते भगवन् भूयो देहि मे मोक्षमव्ययम्॥१॥
स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयाचनाम्।
राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः॥२॥
देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः॥ स्वामी
वो बलवान् राजा स्वामी नोऽसौ जनार्दनः॥३॥
नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम्॥सान-
न्दान्वः प्रपश्यामः पश्यामो नः सुदुःखिनः॥४॥

त्वामाऽमा ॥ १४ ॥

अमा सहितयोर्युष्मदस्मदोस्त्वामादेशौ भवतः।
"पश्यामि त्वा मदालीढं पश्य मा मदभेदकम्॥
पश्यामि त्वा जगत्पूज्यं पश्य मा जगतां पतिम्१४

नाऽऽदौ ॥ १५ ॥

पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भ-
वन्ति। "तव ये शत्रवो राजन् ममतेऽप्यतिशत्रवः॥
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि॥

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥
स एव नाथो भगवानस्माकं पापनाशनः" ॥७॥
पादादाविति किम् ।
"पान्तु वो नरसिंहस्य नखलांगलकोटयः ॥
हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः" ।८।१५।

## चादिभिश्च ॥ १६ ॥

चादिभिःपंचभिरपि योगे नैते आदेशा भवन्ति।
"तव चायं प्रभुर्विष्णुर्मम चायं तथैव च" ॥१६॥

॥ इति युष्मदस्मच्छब्दरूपावलिः समाप्ता ॥

---

## अथाव्ययानि ॥

## चादिर्निपातः ॥ १ ॥

चादिर्गणो निपातसंज्ञको भवति ।
च वा ह अह एवं नूनं पृथक् विना नाना

स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वस् अन्तर् प्रातर् पुनर् भूयस् आहोस्वित् उत सह ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् अ-मा-नो-ना प्रतिषेधे। ईषत् किल खलु वै आरात् भृशं यत् तत् ( स्वराश्च ) चादिर्गणो निपातसंज्ञो भवति॥ तत्रादिर्गणो विभक्त्यर्थे निपात्यते। तस्मिन्निति तत्र। यस्मिन्निति यत्र। कस्मिन्निति कुत्र क्कुह। अस्मिन्निति अत्र। कस्मिन् काले कदा। तस्मिन् काले तदा। यस्मिन् काले यदा। सर्वस्मिन्काले सर्वदा। एकदा। तेन प्रकारेण तथा। एवं यथा कथम्। अनेन प्रकारेण इत्थम्। तस्मादिति ततः। एवं कुतः अतः इतः। सार्वविभक्तिकस्तस् इत्येके। पूर्वस्मिन्निति पुरस्तात्। परस्मिन्निति परेण। "आहिचदूरे"। दक्षिणाहि वसन्ति चाण्डालाः। किमःसामान्ये चिदादिः। कश्चित् कश्चन

किंचन । तदधीनकार्त्स्न्ययोर्वा सात् । राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् । ऊर्युर-र्यंगीकरणे । ऊरीकृत्य उररीकृत्य । सद्यआदिः काले निपात्यते । सद्यः अद्य सपदि अधुना इदा-नीं सांप्रतं संप्रति शीघ्रं झटिति पूर्वेद्युः अन्येद्युः परेद्युः उभयेद्युः यर्हि तर्हि काले ॥ १ ॥

प्रादिरुपसर्गः ॥ २ ॥

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप अन्तर् आविर् प्रादुर् अयं गण उपसर्गसंज्ञकः॥२॥

प्राग्धातोः ॥ ३ ॥

उपसर्गा धातोः प्राक् प्रयोक्तव्याः ॥ ३ ॥

तदव्ययम् ॥ ४ ॥

तदिदं चादिरूपमव्ययसंज्ञं भवति ॥ ४ ॥

क्त्वाद्यन्तश्च ॥ ५ ॥

क्त्वा क्यप् तुम् णम् च्वि डा धा वत् आम् कृत्वस् शस् एतदन्तमव्ययं स्यात् ॥ ५ ॥

अव्ययाद्विभक्तेर्लुक् ॥ ६ ॥

अव्ययात्परस्य विभक्तेर्लुक् भवति न तु शब्दनिर्देशे अव्ययानां च न लिङ्गादिनियमः। उक्तं हि "सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥" ॥ ६ ॥

उक्तान्यव्ययान्यलिंगानि ॥

॥ इत्यव्ययानि समाप्तानि ॥

---

अथ स्त्रीप्रत्ययाः ।

अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ।

आबतः स्त्रियाम् ॥ १ ॥

अकारान्तान्नाम्नः स्त्रियां वर्त्तमानादाप्प्रत्ययो भवति । जाया माया मेधा श्रद्धा धारेत्यादि ॥

अजादेश्चाव्वक्तव्यः ॥ * ॥

अजा एडका कोकिला बाला वत्सा शूद्रा गणिका ॥ १ ॥

काप्यतः ॥ २ ॥

कापि परे पूर्वस्याकारस्य इकारो भवति । कारिका पाठिका कालिका तालिका ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपश्चैव हसान्तानां यथा वाचा निशा दिशा" ॥

अवगाहः वगाहः । अपिधानम् पिधानम् ॥ २ ॥

ह्रस्वो वा स्त्रियाम् ॥ ३ ॥

कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति । वेणिका वेणीका । नदिका नदीका । श्रेयसितरा

श्रेयसीतरा । श्रेयसितमा श्रेयसीतमा । (नौकादौ न भवति ) वाग्रहणादियं विवक्षा । निश्चयेन पतन्त्यनेकेष्वर्थेष्विति निपातानामनेकार्थत्वात् ३॥

ऋण ईप् ॥ ४ ॥

नकारान्तादृकारान्तादणंताच्च स्त्रियामीप्प्रत्ययो भवति । दण्डिनी दन्तिनी करिणी मालिनी ।

ईपि राज्ञोऽल्लोपो वक्तव्यः ❀ ॥

राज्ञी शुनी कर्त्री हर्त्री औपगवी ॥ ४ ॥

यस्य लोपः ॥ ५ ॥

इश्च अश्च यं तस्य लोपो भवति तद्धिते स्वरे यकारे ईपि च परे ॥ ५ ॥

ष्टितः ॥ ६ ॥

षकार टकार उकार ऋकारानुबन्धात् स्त्रियामीप् प्रत्ययो भवति। ष् वराकी। ट् कुरुचरी। उ गोमती ॥ ६ ॥

## अप्ययोराग्नित्यम् ॥ ७॥

अप्प्रत्ययप्रत्ययसम्बन्धिनोऽवर्णात्परस्य शतुर्नित्यं नुमीकारे ईपि च परे। ऋ पचन्ती ऋ पठन्ती इत्यादि ॥ ७॥

## नदादेः ॥ ८॥

नदादेर्गणात् स्त्रियामीप् प्रत्ययो भवति। नदी गौरी गौतमी ॥ ८॥

## इन्द्रादेरानीप् ॥ ९॥

इन्द्रादेर्गणादानीप् प्रत्ययो भवति। इन्द्राणी भवानी शर्वाणी ॥ ९॥

## ईप् समाहारे गुणश्च ॥ १०॥

समाहारार्थे ईप् प्रत्ययो भवति गुणश्च। त्रयी। पञ्चकुली ॥ १०॥

## पुंयोगे च ॥ ११ ॥

अकारान्तात् पुंयोगे ईप् प्रत्ययो भवति। शूद्रस्य स्त्री शूद्री। गणकी ॥ ११ ॥

## जातेरयोपधात् ॥ १२ ॥

जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रिया-मीप् प्रत्ययो भवति। मेषी सूकरी हंसी कुक्कुटी, ब्राह्मणी। अयकारोपधादिति किम् क्षत्रिया। वैश्या॥

प्रथमवयोवाचिनोऽत ईप् वक्तव्यः ॥ ❀ ॥ कुमारी किशोरी कलभी। प्रथमग्रहणात् किम्। वृद्धा। स्थविरा। अद्ग्रहणात् किम्। शिशुः १२॥

## स्वाङ्गाद्वा ॥ १३ ॥

स्वाङ्गवाचिनो वा स्त्रियामीप् प्रत्ययो भवति। सुमुखी मृगाक्षी तन्वंगी। वाग्रहणात् पद्मवदना, कमलवदना इत्यादौ न भवति।

कृदिकारादक्तेरीप् वा वक्तव्यः ॥ ❀ ॥

अंगुलिः अंगुली। धूलिः धूली। आजिः आजी। अक्तेरिति विशेषणात् कृतिः भूतिः ॥ १३ ॥

## ऐ च मन्वादेः ॥ १४ ॥

मन्वादेर्गणात् स्त्रियामीप् प्रत्ययो भवति ऐकारादेशश्च। मनायी। चकारात् (मनोरौ वा)। मनावी। मनुः। वृषाकपायी ॥ १४ ॥

## पत्न्यादयः ॥ १५ ॥

पत्न्यादयो निपात्यन्ते। पत्नी अन्तर्वत्नी सखी अशिश्वी अर्द्धजरती युवती प्राची प्रतीची उदीची समीची। दारशब्दो नित्यं बहुवचनान्तः। पुँल्लिंगः। दाराः। दारान्। दारैः। दारेभ्यः २ दाराणाम्। दारेषु। हे दाराः ॥ १५ ॥

## वोर्गुणात् ॥ १६ ॥

उकारान्ताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति पट्वी-पटुः। मृद्वी-मृदुः। तन्वी-तनुः। ऋज्वी-ऋजुः ॥ १६ ॥

## उत ऊः ॥ १७ ॥

उकारान्तान्मनुष्यजातेः स्त्रियामूप्रत्ययो वा भवति। पंगूः-पंगुः। वामोरूः-वामोरुः ॥ १७॥

## यूनस्तिः ॥ १८ ॥

युवन्शब्दात्स्त्रियां तिप्रत्ययो भवति। युवतिः। एभ्यो नामत्वात् स्यादयः। आबन्ताद् "आपः" इति सिलोपः। ईबन्तात् "ह्रसेपः सेर्लोपः" पूर्ववत् प्रक्रिया ॥ ॥ १८ ॥

॥ इति स्त्रीप्रत्ययास्समाप्ताः ॥

## अथ विभक्त्यर्थो निरूप्यते।

### लिंगार्थे प्रथमा ॥ १ ॥

धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिंगम्। तस्यैवार्थे सन्मात्रे प्रथमा विभक्तिर्भवति लिंगादयोऽपि प्रथमार्था इति केचित्। तत्सद्भ्रह्म। "[1]रविरिव राजते राजा रोषात्कुमारी रोरूयते॥बोभुज्यते भुवं भूपालः प्रागास्तां रामलक्ष्मणौ ॥ १ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ॥ परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ २ ॥

कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः ॥ जेगीयन्ते च गीतज्ञा मेम्रियन्ते रुजार्दिताः॥३॥"

---

१ यदा कर्ता प्रथमान्तः कर्म्मणि द्वितीया तदा ॥ यदा कर्ता तृतीयान्तः कर्मणि प्रथमा तदा ॥ १ ॥

## आमन्त्रणे च ॥ २ ॥

आमन्त्रणमभिमुखीकरणम् । तस्मिन्नर्थे प्रथमा विभक्तिर्भवति ।

"मां समुद्धर गोविंद प्रसीद परमेश्वर ॥
कुमारौ स्वैरमासाथां क्षमध्वं भोस्तस्विनः" ॥२॥

## भोसः ॥ ३ ॥

भोस् भगोस् अघोस् एते शब्दा भवद्भगवद्-घवतां स्थाने निपात्यन्ते धिविषये ।

"क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोस्तुते ॥
अधीष्व भो महाप्राज्ञ घातयाघोस्स्वघस्मरम् ॥"

इति प्रथमा ॥ १ ॥

## शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ सम्बन्धआधारभावयोः ४

शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति ॥

"कर्त्ता कर्म्म च करणं सम्प्रदानं तथैव च॥
अपादानाधिकरणमित्याहुःकारकाणि षट् १॥"

कार्ये कर्मकारके उत्पाद्ये आप्ये संस्कार्य्ये विकार्ये च द्वितीया विभक्तिर्भवति ।

"कटं करोति कारूको रूपं पश्यति चाक्षुषः॥
राज्यं प्राप्नोति धर्मिष्ठःसोमं सुनोति सोमपाः १॥"

"अभिसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते२"

अभितो ग्रामं नदी वहति । सर्वतो ग्रामं वनानि सन्ति । धिग् देवदत्तम् । उपर्य्युपरि ग्रामं मेघाः पतन्ति। अधोऽधो ग्रामं शलभाः पतन्ति। अध्यधि ग्रामं मृगाश्चरन्ति। (समयानिकषाहाप्रतियोगेऽपि) समया ग्रामम् । निकषा ग्रामम् । अनुग्रामम्॥४॥

**कालाध्वनोर्नैरन्तर्येऽपि ॥ ५ ॥**

कालाध्वनोर्नैरन्तर्ये द्वितीया विभक्तिर्भवति।

मासमधीते । क्रोशं पर्वतः । नैरन्तर्याऽभावे मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥ ५ ॥

इति द्वितीया ॥ २ ॥

## कर्तरि प्रधाने क्रियाश्रये साधने च ॥ ६ ॥

क्रियासिद्ध्युपकारके करणेऽर्थे तृतीया विभक्तिर्भवति ।

"भिन्नः शरेण रामेण रावणो लोकरावणः ॥
कराग्रेण विदीर्णोऽपि वानरैर्युद्ध्यते पुनः॥६॥"

॥ इति तृतीया ॥ ३ ॥

## दानपात्रे चतुर्थी ॥ ७ ॥

दानपात्रे सम्प्रदानकारके चतुर्थी । सम्यक् श्रेयोबुद्ध्या प्रदीयते तत् सम्प्रदानम् ।

"ददाति दण्डं पुरुषो महीपतेर्न चातिभक्त्या न च दानकाम्यया ॥ यद्दीयते दानतया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः ॥ १ ॥"
वेदविदे गां ददाति । अन्यत्र राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति ॥ ७ ॥

इति चतुर्थी ॥ ४ ॥

## विश्लेषाऽवधौ पञ्चमी ॥ ८ ॥

विश्लेषो विभागस्तत्र योऽवधिश्चलतयाऽचलतया वा विवक्षितस्तत्रापादाने पञ्चमी । धावतोऽश्वादपतत् । भूभृतोऽवतरति गंगा ॥ ८ ॥

इति पञ्चमी ॥ ५ ॥

## सम्बन्धे षष्ठी ॥ ९ ॥

सम्बंधिनोर्मध्ये योऽप्रधानस्तत्र षष्ठी । "भेद्यभेदकयोः श्लिष्टः स सम्बन्धोऽन्य उच्यते॥ द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥१॥"

एकक्रियातः परस्परापेक्षारूपः सम्बन्धः ।
"राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् ।
गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥ १ ॥"

इति षष्ठी ॥ ६ ॥

## आधारे सप्तमी ॥ १० ॥

आधारोऽधिकरणं तत् षड्विधम् । औपश्लेषिकम् १ सामीपिकम् २ अभिव्यापकम् ३ वैषयिकम् ४ नैमित्तिकम् ५ औपचारिकं ६ चेति ।

"कटे शेते कुमारोऽसौ वटे गावः सुशेरते ॥
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥ १ ॥"
'युद्धे सन्नह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् १० ॥'

## भावः क्रियालक्षणं तत्रापि सप्तमी ॥ ११ ॥

प्रसिद्धक्रियाऽप्रसिद्धक्रियाबोधनं भावः । वर्षति

देवे चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः ॥ ११ ॥

अथोपपदविभक्त्यर्थो निरूप्यते ॥

## विनासहनमस्कृतेनिर्द्धारणे स्वाम्यादिभिश्च ॥ १२ ॥

एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति। विना पापं सर्वं फलति ।

"विना वातं विना वर्षं विद्युतः पतनं विना ।
विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ॥"

अन्तरेणाक्षिणी किं जीवितेन । अन्तरा त्वां मां हरिरित्यादिपदात् ग्राह्यम् ॥ १२ ॥

## सहादियोगे तृतीया ॥ १३ ॥

सह सदृशं साकं सार्द्धं समं योगेऽपि तृतीया । सह शिष्येणागतो गुरुः।सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्लक्ष्णा दन्ताः । सार्द्धं धनिभिर्धृतः

साधुः । समं चन्द्रेणोदितो गुरुः ॥ १३ ॥

नमःस्वस्तिस्वाहास्वधाऽलंवष-
ड्योगे चतुर्थी ॥ १४ ॥

नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषडिंद्राय ॥ १४ ॥

ऋतेआदियोगे पञ्चमी ॥ १५ ॥

ऋते ज्ञानान्न मुक्तिः।अन्यो गृहाद्विहारः ॥ १५॥

ऋतेयोगे द्वितीयाऽपि ॥ १६ ॥

ज्ञानमृते ॥ १६ ॥

विनायोगे पंचमी ॥ १७ ॥

ज्ञानेन विना ॥ १७ ॥

दिग्योगे तृतीया ॥ १८ ॥

पूर्वो ग्रीष्माद्वसन्तः ॥ १८ ॥

निर्द्धारणे षष्ठीसप्तम्यौ ॥ १९ ॥

निर्द्धारणं क्रियागुणजातिभिः समुदायात् पृथक्करणम् तत्र षष्ठीसप्तम्यौ भवतः। क्रियापराणां भगवदाराधकः श्रेष्ठः क्रियापरेषु वा। गवां कृष्णा गौः संपन्नक्षीरा गोषु वा। एतेषां क्षत्रियः शूरतमः एतेषु वा ॥ १९ ॥

## स्वाम्यादियोगे षष्ठीसप्तम्यौ भवतः ॥ २० ॥

गोषु स्वामी । गवां स्वामी । गवामधिपतिः गोष्वधिपतिः ॥ २० ॥

## कर्तृकार्ययोरक्तादौ कृति षष्ठी ॥ २१ ॥

कर्तरि कार्ये च षष्ठीविभक्तिर्भवति क्तादिवर्जिते शब्दे प्रयुज्यमाने। व्यासस्य कृतिः। भारतस्य श्रवणम् ॥ २१ ॥

स्मरतौ च कार्ये ॥ २२ ॥

स्मरतौ धातौ प्रयुज्यमाने कर्मणि षष्ठी । मातुः स्मरति मातरं स्मरति ।

हेतौ तृतीया पंचमी च वक्तव्या ॥ * ॥

अनित्यः शब्दः कृतकत्वेन कृतकत्वाद्वा ॥ २२ ॥

भयहेतौ पञ्चमी ॥ २३ ॥

चोराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाताच्चकितः ॥ २३ ॥

षष्ठी हेतुप्रयोगे ॥ २४ ॥

कस्य हेतोरिमं कन्या। अन्यस्य हेतोर्वसति।२४।

इत्थम्भावे तृतीया ॥ २५ ॥

शिष्यं पुत्रेण पश्यति । संसारमसारेण । पुष्करिणीं नद्या पश्यति ॥ २५ ॥

येनाङ्गविकारः ॥ २६ ॥

येनांगेन विकृतेनांगिनो विकारो लक्ष्यते तस्मा-

दंगात्तृतीया विभक्तिर्भवति। देवदत्तोऽक्ष्णा काणः। पादेन खञ्जः। कर्णेन बधिरः। शिरसा खल्वाटः ॥ २६ ॥

## जनिकर्तुः प्रकृतिः ॥ २७ ॥

जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति। तत्रापादाने पञ्चमी।

यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेति विदुर्बुधाः ॥ २७ ॥

## आङ्गादियोगे पञ्चमी ॥ २८ ॥

आपाटलिपुत्राद्दृष्टो देवः ॥ २८ ॥

## तादर्थ्ये चतुर्थी ॥ २९ ॥

"संयमाय श्रुतं धत्ते नरो धर्माय संयमम्। धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥२९॥"

## क्रुध्यादियोगे चतुर्थी ॥ ३० ॥

क्रूराय क्रुध्यति। मित्राय द्रुह्यति। गुणवते असूयति। क्यब्लोपे कर्मण्यधिकरणे पञ्चमी च वक्तव्या ❋ ॥

हर्म्यात् प्रेक्षते । आसनात् प्रेक्षते ।
निमित्तात्कर्मयोगे सप्तमी च वक्तव्या ॥ * ॥
"चर्म्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ३०॥"

विषये च ॥ ३१ ॥

तर्के चतुरः ॥ ३१ ॥

षष्ठीसप्तम्यौ चानादरे ॥ ३२ ॥

बहूनां क्रोशतां गतश्चौरः। बहुष्वसाधुषु निवारयत्स्वपि स्वयमार्यो याति साधुमार्गेण । बहुषु साधुषु वदत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण। मातापित्रो रुदतोः प्रव्रजति पुत्रः ॥ ३२ ॥

अन्योक्ते प्रथमा ॥ ३३ ॥

यदिदं कार्यत्वादन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या। घटः क्रियते पटः कार्यः ३३

छन्दसि स्यादिः सर्वत्र ॥ ३४ ॥

दध्ना जुहोति । पुनन्तु ब्रह्मणस्पतिः। ब्रजतीर्विरेजुः।

॥ इति कारकप्रक्रिया ॥

## अथार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते ॥

## समासश्चान्वये नाम्नाम् ॥ १ ॥

नाम्नामन्वययोग्यत्वे सत्येव समासो भवति चशब्दात्तद्धितोऽपि भवति । ततो भार्या पुरुषस्येत्यादौ न भवति परस्परमसम्बन्धात्। स च षड्विधः। अव्ययीभावस्तत्पुरुषो द्वंद्वो बहुब्रीहिः कर्म्मधारयो द्विगुश्चेति। तत्र पूर्वपदप्रधानोऽव्ययीभावः। द्विगुतत्पुरुषौ परपदप्रधानौ द्वंद्वकर्म्मधारयौ चोभयपदप्रधानौ । बहुब्रीहिरन्यपदप्रधानः। तस्य क्रियाभिसम्बन्धात् उभयपदप्रधानो बलवान् ।

ऐकपद्यमैकस्वर्य्यमेकविभक्तिकत्वञ्च समासप्रयोजनम् । स्त्रियमधिकृत्य भवतीति विग्रहे ।

अन्वययोग्यार्थसमर्थकः पदसमुदायो विग्रहो वाक्यमिति यावत् । स्वपदैरन्यपदैर्वा विविच्य कथनं विग्रहः ॥ १ ॥

कृते समासे अव्ययस्य पूर्वनिपातो वक्तव्यः। ❀।

पूर्वेऽव्ययेऽव्ययीभावः ॥ २ ॥

अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ २ ॥

इति समाससंज्ञायां सत्याम्-

समासप्रत्यययोर्लुक् ॥ ३ ॥

समासे वर्तमानायाः विभक्तेः प्रत्यये च परे लुग् भवति । इत्यसो लुक् ( निमित्ताभावे नैमित्तिकस्याप्यभावः ) नामसंज्ञायां स्यादिर्विभक्तिः अधिस्त्री सि इति स्थिते ॥ ३ ॥

स नपुंसकम् ॥ ४ ॥

सोऽव्ययीभावो नपुंसकलिंगो भवति नपुंसकत्वाद्ध्रस्वत्वम् ॥ ४ ॥

## अव्ययीभावात् ॥ ५ ॥

अव्ययीभावात्परस्या विभक्तेर्लुग् भवति । अधिस्त्रि गृहकार्यम् । रायमतिक्रांतमतिरि कुलम् । नावमतिक्रान्तमतिनु जलम् ।

ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥ * ॥ ५ ॥

## यथाऽसादृश्ये ॥ ६ ॥

यथाशब्दोऽसादृश्ये वर्त्तमानः समस्यते । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानियथार्थाः । रूपस्य योग्यमनुरूपम् । पदार्थान् व्याप्तुमिच्छा वीप्सा । विष्णुं विष्णुं प्रति प्रतिविष्णु । सादृश्ये तु यथा हरिस्तथा हरः ।

शक्तिमनतिक्रम्य करोतीति यथाशक्ति ॥ ६ ॥

## अतोऽमनतः ॥ ७ ॥

अकारान्तादव्ययीभावात्परस्या विभक्तेरम्

भवति अतं वर्ज्जयित्वा। कुम्भस्य समीपमुपकुम्भं वर्त्तते । उपकुम्भं पश्य । उपकुम्भादानय । अनत इति विशेषणात्पंचम्या अम् न भवति ॥ ७ ॥

वा टाङ्योः ॥ ८ ॥

टा ङि इत्येतयोर्वा अम् भवति। उपकुम्भेन कृतम् उपकुम्भंकृतम्। उपकुम्भं निधेहि-उपकुम्भेनिधेहि

अवधारणार्थे यावति च ॥ ९ ॥

अवधारणार्थे यावच्छब्दे पूर्वपदे सति अव्ययीभावसंज्ञकः समासो भवति । यावंत्यमत्राणि भवंति तावतो ब्राह्मणान्निमन्त्रयस्वेति यावदमत्रम् मक्षिकाणामभावो निर्मक्षिकं वनं वर्तते ॥ ९ ॥

इत्यव्ययीभावसमासः ॥

अमादौ तत्पुरुषः ॥ १ ॥

द्वितीयाद्यन्ते पूर्वपदे सतियोऽन्वयस्स तत्पुरुषसंज्ञकः समासो भवति। ग्रामं प्राप्तो ग्रामप्राप्तः।

दात्रेण छिन्नं दात्रच्छिन्नम् । यूपाय दारु यूपदारु। वृकेभ्यो भयं वृकभयम्।राज्ञः पुरुषो राजपुरुषः। अक्षेषु शौण्डः अक्षशौण्डः॥(क्वचिदमाद्यन्तस्य परत्वम्) अग्निमाहितः आहिताग्निः।पूर्वं भूतो भूतपूर्वः। (समासे क्वचिदैकपद्यं णत्वहेतुः)शराणां वनम् शरवणम्।आम्राणां वनम् आम्रवणम्। (पानस्य वा )सुरापानम्=सुरापाणम् ॥ १ ॥

नञि ॥ २ ॥

नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥ न ब्राह्मणः अब्राह्मणः ॥ २ ॥

ना ॥ ३ ॥

समासे सति नञोऽकारादेशो भवति ॥ ३ ॥

नाकादिवर्जम् ॥ ४ ॥

नाकम् । नपुंसकम् ॥ ४ ॥

अन् स्वरे ॥ ५ ॥

समासे सति नञोऽनादेशो भवति स्वरे परे। अश्वादन्योऽनश्वः।धर्म्माद्विरुद्धोऽधर्म्मः । ग्रहण-स्याभावोऽग्रहणमित्यादि । तदन्यतद्विरुद्धत-द्भावेषु नञ् वर्त्तते ॥ ६ ॥

इति तत्पुरुषः ॥

## चार्थे द्वन्द्वः ॥ १ ॥

समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियाभि-संबन्धे समुच्चये समासो नास्ति । बटो भिक्षामट गां च नयेति क्रमेण क्रियाद्वयसम्बन्धे अन्वाचये च समासो नास्ति परस्परमसम्बन्धात् । इतरे-तरयोगे समाहारे चार्थे द्वन्द्वः समासो भवति । द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातो वक्तव्यः ॥ * ॥

अग्निश्च मारुतश्च अग्निमारुतौ । पटुश्च-गुप्तश्च पटुगुप्तौ ॥ १ ॥

## उक्तार्थानामप्रयोगः ॥ २ ॥

स्त्री च पुरुषश्च स्त्रीपुरुषौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवखदिरौ ।

॥देवताद्वन्द्वे पूर्वपदस्य दीर्घो वक्तव्यः ॥ ❀ ॥

अग्निश्च सोमश्च अग्नीषोमौ। इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती ।

अग्न्यादेः सोमादीनां षत्वं वक्तव्यम् ॥ ❀ ॥

इतरेतरयोगे द्विवचनम् । अग्नीषोमौ ।

एकवद्भावो वा समाहारे वक्तव्यः ॥ ❀ ॥

शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः । तेषां समाहारः शशकुशपलाशम् ॥ २ ॥

## स नपुंसकम् ॥ ३ ॥

यस्यैकवद्भावः स नपुंसकं भवति ।

अग्न्यादीनां विभक्तिलोपे कृते पूर्वस्य सगागमो वक्तव्यः ॥ ❀ ॥

अन्यश्च अन्यश्च अन्योन्यम् । परश्च परश्च परस्परम् ॥ ३ ॥

॥ इति द्वन्द्वसमासस्समाप्तः ॥

## एकत्वे द्विगुद्वन्द्वौ ॥ १ ॥

एकत्वे वर्त्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः।

## संख्यापूर्वो द्विगुः ॥ २ ॥

संख्यापूर्वः समासो द्विगुर्निगद्यते ॥ २ ॥

## समाहारेऽत ईप् द्विगुः ॥ ३ ॥

समाहारेऽर्थे द्विगुः समासो भवति । ततोऽकारान्तादीप्प्रत्ययो भवति । दशानां ग्रामाणां समाहारो दशग्रामी। अकारान्तो द्विगुः स्त्रियां भाष्यते ॥ पञ्चाग्नयः समाहृता इति पञ्चाग्नि । पञ्चानां गवां समाहारः पञ्चगु । नपुंसकत्वात् ह्रस्वत्वम् । त्रिफलेति रूढिः ॥ ३ ॥

पात्रादीनामीप्प्रतिषेधो वक्तव्यः ॥ ❀ ॥

पञ्चपात्रम् त्रिभुवनम् ।

॥ इति द्विगुसमासस्समाप्तः ॥

## बहुव्रीहिरन्यार्थे ॥ १ ॥

अन्यार्थे प्रधाने यः समासः स बहुव्रीहिसंज्ञको भवति । बहु धनं यस्य स बहुधनः । अस्ति धनं यस्य स अस्तिधनः । ( यस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो बहु-व्रीहिः ) यथा लम्बौ कर्णौ यस्य स लम्बकर्णः ।

बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः ॥ ❀ ॥

कण्ठे कालो यस्यासौ कण्ठेकालः । करे धनं यस्य स करधनः ॥ १ ॥

## नेन्द्वादिभ्यः ॥ २ ॥

सप्तम्यन्तस्य पूर्वनिपातो न भवति ॥ इन्दुशे-खरः ॥ चक्रपाणिः । पद्मनाभः।कपिध्वजः ॥२॥

## प्रजामेधयोरसुक् ॥ ३ ॥

सुप्रजाः । दुर्मेधाः " अत्वसोः सौ" ॥ ३ ॥

धर्मादन् ॥ ४ ॥

सुधर्मा ॥ ४ ॥

अन्यार्थे ॥ ५ ॥

स्त्रीलिङ्गस्यान्यार्थे वर्त्तमानस्य ह्रस्वो भवति पुंवद्वा । ( समासे सति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्भावो वा भवति ) पुंवद्भावादीबापो-र्निवृत्तिः । रूपवती भार्या यस्य स रूपवद्भार्यः । वाग्रहणात् कल्याणीप्रिय इत्यादौ न भवति५॥

गोः ॥ ६ ॥

गोशब्दस्यान्यार्थे वर्त्तमानस्य ह्रस्वो भवति । पंच गावो यस्य स पंचगुः ।

संख्यासुव्याघ्रादिपूर्वस्य पाद-शब्दस्याऽलोपो वक्तव्यः ॥ ❀ ॥

सहस्रं पादा यस्य स सहस्रपात् । शोभनौ पादौ यस्य स सुपात् । व्याघ्रस्य पादाविव

पादौ यस्य स व्याघ्रपात् । द्वौ पादौ यस्य स द्वि-
पात्, द्विपादौ, द्विपादः । द्विपादम्, द्विपादौ ।
शसादौ स्वरे परे पदादेशश्च वक्तव्यः ॥ ❀ ॥
द्विपदः।द्विपदा,द्विपाद्भ्याम्,द्विपाद्भिः।इत्यादि६

## टाडकाः ॥ ७ ॥

समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति।
"टकारस्तत्पुरुषे ज्ञेयो ह्यकारो द्वन्द्व एव च ॥
डकारश्च बहुव्रीहौ ककारोऽनियमो मतः॥७॥"

## नो वा ॥ ८ ॥

नान्तस्य पदस्य टेर्लोपो वा भवति यकारे
स्वरे परे।वाग्रहणात् क्वचिन्न भवत्युपधालोपश्च।
अह्नो मध्यं मध्याह्नः। कवीनां राजा कविराजः।
टकारानुबन्ध ईबर्थः। कविराजी। राज्ञां पूः राज-
पुरम् । वाक् च मनश्च वाङ्मनसम् । दक्षिणस्यां

दिशि पन्थाः दक्षिणापथः। अहश्च रात्रिश्च अहोरात्रः। द्वौ च त्रयश्च परिमाणं येषां ते द्वित्राः। पञ्च च षट् च परिमाणं येषां ते पञ्चषाः। बहवो राजानो यस्यां नगर्यां सा बहुराजा नगरी। अत्र टिलोपे कृते "आबतः स्त्रियाम्" इत्याप्। बहवः कर्त्तारो यस्य स बहुकर्तृकः ॥ ८ ॥

## कर्म्मधारयस्तुल्यार्थे ॥ ९ ॥

पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्म्मधारयः समासो भवति। नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ लता च रक्तलता। पुमांश्चासौ कोकिलश्चेति पुंस्कोकिलः।

पुंसः खपे संयोगान्तस्यालोपो वक्तव्यः॥ * ॥९॥

## नाम्नश्च कृता समासः ॥ १० ॥

प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासस्तत्पु-

रुषो भवति । प्रकृष्टो वादः प्रवादः । कुम्भं करोतीति कुम्भकारः ॥ १० ॥

## सहादेः सादिः ॥ ११ ॥

समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्त्तत इति सपुत्रः । सहसंतिरसां सध्रिसमितिरयः॥ ❀ ॥सह अञ्चतीति सध्र्यङ् । सम् अञ्चतीति सम्यङ् । तिरः अञ्चतीति तिर्य्यङ्॥११॥

## कोः कदादिः ॥ १२ ॥

कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुषे कत् कव का आदेशा भवंति । कुत्सितमन्नं कदन्नम् । ईषदर्थे । ईषदुष्णं कवोष्णम् ॥ १२ ॥

## कोर्म्मन्दादेशश्च ॥ १३ ॥

मन्दोष्णम् ॥ १३ ॥

रथवदयोश्च ॥ १४ ॥

कद्रथः । कद्वदः ॥ १४ ॥

पुरुषे वा ॥ १५ ॥

कुपुरुषः ॥ कापुरुषः ॥ १५ ॥

पथ्यक्षयोः ॥ १६ ॥

कोः कादेशः स्यात् । कुपथः कापथः। कक्षः। काक्षः ॥ १६ ॥

ईषदर्थे च ॥ १७ ॥

ईषज्जलं काजलम् । षड्भिरधिका दश षोडश। षट् दन्ता यस्य स षोडन् । षष् दन्त इति स्थिते ( दन्तस्य दतृ ) ऋ इत् । षस्य उत्वम् । दस्य डः। "ऋितो नुम्" । षोडन् । षट् प्रकाराः षोढा। ( संख्यायाः प्रकारे धा ) धस्य ढः ॥

षष उत्वं दतृदशधासूत्वमुत्तरपदादेः ष्टुत्वं च भवतीति वक्तव्यम् ॥ * ॥ १७ ॥

बृहच्छब्दस्य सुडागमस्तलोपश्च ॥ १८ ॥

बृहतां पतिः बृहस्पतिः ॥ १८ ॥

महच्छब्दस्य टेराकारः समानाधिकरणे ॥ १९ ॥

महादेवः । महेश्वरः॥ द्यौश्च भूमिश्च द्यावाभूमी ( द्योशब्दस्य द्यावादेशः ) ( जायाया जम्भावो दम्भावो निपात्यते ) दम्पती जम्पती । क्वचिज्जायापती । आकृतिगणोऽयम् ॥ १९ ॥

अलुक् क्वचित् ॥ २० ॥

क्वचित्समासे कृदन्ते तद्धितेऽपि विभक्तेरलुक् भवति । कृच्छ्रान्मुक्तः । अप्सु योनिरस्येत्यप्सुयो-

निः। उरसि लोमानि यस्यासौ उरसिलोमा। हृदि स्पृशतीति हृदिस्पृक्। कण्ठे कालो यस्यासौ कण्ठेकालः। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। वनेचरः। खेचरः।

समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः ॥ * ॥

शाकः प्रियः यस्य सः शाकप्रियः। शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिवः ॥ २० ॥

## आदेश्च द्वन्द्वे ॥ २१ ॥

द्वंद्वे समासे पूर्वपदस्य लोपो भवति॥ चकारग्रहणात् विकल्पेन। माता च पिता च पितरौ। शिष्यमाणो लुप्यमानार्थाभिधायी। श्वश्रूश्च श्वशुरश्च श्वशुरौ। दुहिता च पुत्रश्च पुत्रौ॥ २१॥

## ऋतां द्वंद्वे ॥ २२ ॥

द्वन्द्वे समासे पूर्वपदस्य ऋकारस्य वा आकारो भवति । माता च पिता च मातापितरौ ॥ २२॥

## द्वंद्वे सर्वादित्वं वा जसि ॥ २३ ॥

द्वन्द्वे समासे सर्व्वादित्वं वा भवति जसि परे ॥ वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे वर्णाश्रमेतराः ।

वैयधिकरण्ये बहुव्रीहौ मध्यमपद-
लोपो वक्तव्यः ॥ ❀ ॥

## उपमानाच्च ॥ २४ ॥

उपमानात्परस्य गन्धशब्दस्याकारस्यैकारो भवति। कुमुदस्य गन्ध इव गन्धो यस्य सः कुमुद्गन्धिः। हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥ २४ ॥

## सङ्ख्ये संज्ञायाम् ॥ २५ ॥

दिग्वाचकसङ्ख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति।स्वपदविग्रहो नित्यसमासः । अन्यस्त्वस्वपदविग्रहोऽपि । दक्षिणाग्निः । सप्तग्रामः॥२५॥

॥ इति समासप्रक्रिया समाप्ता ॥

---

# अथ तद्धिता निरूप्यन्ते ।

## अपत्येऽण् ॥ १ ॥

नाम्नोऽपत्येऽर्थे अण् प्रत्ययो भवति॥उपगोरपत्यमिति वाक्येउपगोः अण् इति स्थिते "समास प्रत्यययोः" इति षष्ठीलोपः।णकारो वृद्ध्यर्थः॥

## आदिस्वरस्य ञ्णिति च वृद्धिः ॥ २ ॥

स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः।उकारस्य औकारो वृद्धिः ॥ २ ॥

**वोऽव्यस्वरे ॥ ३ ॥**

उकारस्यौकारस्य च अव् भवति यकारे स्वरे च परे। औपगवः । वासिष्ठः । गौतमः ।
शिवादिभ्यश्चेति वक्तव्यः।❀। शैवः। वैदेहः॥३॥

**ऋ उरणि ॥ ४ ॥**

ऋकारस्य उर्भवति अणि परे ॥ ४ ॥

**षषो णो मातरि ॥ ५ ॥**

षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥ ५ ॥

**अत इञनृषेः ॥ ६ ॥**

अकारान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ् प्रत्ययो भवति । "यस्य लोपः" । देवदत्तस्यापत्यं दैव-

दत्तिः। श्रीधरस्यापत्यं श्रैधरिः। दशरथस्यापत्यं दाशरथिः। पुरन्दरस्यापत्यं पौरन्दरिः ॥ ६ ॥

## बह्वादिभ्यश्च ॥ ७ ॥

औपगविः। कार्ष्णिः। औडुलोमिः आग्निशर्मिः ॥

## ण्याऽयनणेयणणीया गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च ॥ ८ ॥

गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात् पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे। गर्गस्यापत्यं गार्ग्यः। वत्सस्यापत्यं वात्स्यः। नडस्यापत्यं नाडायनः। चरस्यापत्यं चारायणः। अत्रेरपत्यमात्रेयः। गाङ्गेयः। मह्या अपत्यं माहेयः। कपेरपत्यं कापेयः। पैतृष्वस्रीयः ॥ ८ ॥

## अलुक् क्वचित् ॥ ९ ॥

अमुष्य अपत्यम् आमुष्यायणः ।

मातृपितृभ्यां स्वसुः सस्य षत्वं वक्तव्यम् ॥ * ॥
मातृष्वस्रीयः । पैतृष्वस्रीयः ॥ ९ ॥

## पितृमातृभ्यां व्यड्डुलौ ॥ १० ॥

पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ॥१०॥

## पितुर्डामहन् ॥ ११ ॥

पितुःपिता पितामहः। पितुर्माता पितामही॥११॥

## लुग्बहुत्वे क्वचित् ॥ १२ ॥

अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदृष्यनृषिविषये लुग् भवति । गर्गाः । वसिष्ठाः । अत्रयः । विदेहाः ॥ १२ ॥

देवतेदमर्थे ॥ १३ ॥

देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति । इन्द्रो देवता अस्येति ऐन्द्रं हविः । सोमो देवता अस्येति सौम्यम् । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥ १३ ॥

क्वचिद्द्वयोः ॥ १४ ॥

पूर्वपदोत्तरपदाद्योः क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवतेअस्येतिआग्निमारुतंकर्म्म।सुहृदोभावः सौहार्दम् । अत्र भावे अण् वक्तव्यः ॥ ❀ ॥१४॥

णितो वा ॥ १५ ॥

उक्ताः प्रत्यया विषयान्तरेऽपि णितो वा भवंति। अजो गौर्यस्य सः अजगुस्तस्येदं धनुः आजगवम् अजगवं वा । कुमुदस्य गंध इव गन्धो यस्य सः कुमुदगंधिः तस्यापत्यं स्त्री कौमुदगन्ध्या । श्वशु-

रस्यायं श्वाशुर्यो ग्रामः। विष्णोरिदं वैष्णवम्। गोरिदं गव्यम्। कुलस्येदं कुल्यम् ॥ १५ ॥

## त्वन्मदेकत्वे ॥ १६ ॥

तव इदं त्वदीयम्। मम इदं मदीयम् ॥ १६ ॥

## चतुरश्चलोपः ॥ १७ ॥

चतुरशब्दस्य चकारस्य लोपो भवति ण्यणी-ययोः परतः। तुर्य्यः, तुरीयः ॥ १८ ॥

## अन्यस्य दक् ॥ १८ ॥

अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे। अन्यस्य इदमन्यदीयम्। अर्द्धजरत्या इदमर्द्धजरतीयम् ॥ १८ ॥

## कारकात्क्रियायुक्ते ॥ १९ ॥

कारकादप्येते प्रत्यया भवंति क्रियायुक्ते कर्तरि कर्म्मणि चाभिधेये। कुंकुमेन रक्तं वस्त्रं कौंकुमम्।

मथुराया आगतो माथुरः । ग्रामे भवः ग्राम्यः ।
धुरं वहतीति धुर्यः धौरेयः ॥ १९ ॥

## केनेयेकाः ॥ २० ॥

क ईन इय इक इत्येते प्रत्यया भवंति भवाद्यर्थेषु । णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः।कर्णाटको वा । ग्रामादागतस्तत्र जातो वा ग्रामीणः ग्राम्यः।सध्रीचि भवः सध्रीचीनः । समीचि भवः समीचीनः।तिरश्चिभवः तिरश्चीनः२०

## यलोपश्च ॥ २१ ॥

क्वचिद्यकारलोपो भवति । कन्यायाः जातः कानीनः ।

नक्षत्रादण् वक्तव्यः ॥ ❀ ॥

पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ॥ २१ ॥

## द्वयो वा ॥ २२ ॥

क्षतात् त्रायत इति क्षत्रं क्षत्रे भवः क्षत्रियः क्षात्रः । शुक्राज्जातं शुक्रियम् । इन्द्राज्जातमिंद्रियम् । अक्षैर्दीव्यतीति आक्षिकः । शब्दं करोतीति शाब्दिकः । तर्कं करोतीति तार्किकः । वेदे जाता वैदिकी स्तुतिः, ऋग्वा ॥ २२ ॥

## किमादेस्त्यतनौ ॥ २३ ॥

किमादेरद्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः । कुत्र भवः कुत्रत्यः । कुतस्त्यः । अद्य भवः अद्यतनः । ह्यो भवः ह्यस्तनः । श्वो भवः श्वस्तनः । सदा भवः सदातनः ।

दक्षिणापश्चात्पुरसस्त्यण्वक्तव्यः ॥ * ॥

दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ॥ २३ ॥

स्वार्थेऽपि ॥ २४ ॥

उक्ता प्रत्ययाः स्वार्थेपि भवंति। देवदत्त एव दैवदत्तकः। चत्वार एव वर्णाः चातुर्वर्ण्यम्। चोर एव चौरः ॥ २४ ॥

भागरूपनामभ्यो धेयः ॥ २५ ॥

भागधेयम्। रूपधेयम्। नामधेयम् ॥ २५॥

अणीनयोर्युष्मदस्मदोस्त-
वकादिः ॥ २६ ॥

अणीनयोर्युष्मदस्मदोस्तवकादय आदेशा भवंति। तव इदं तावकम्। मम इदं मामकम्। तावकीनः। मामकीनः। यौष्माकः। आस्माकः। यौष्माकीणः। आस्माकीनः ॥ २६ ॥

वत्तुल्ये ॥ २७ ॥

तुल्ये साहृश्येऽर्थे वत् प्रत्ययो भवति। चन्द्रेण

तुल्यं चन्द्रवत् मुखम्। घटेन तुल्यं घटवत् उदरम्। पटवत् कम्बलम्॥ २७॥

भावे तत्वयणः॥ २८॥

शब्दस्य प्रवृत्तिनिमित्तं भावः तस्मिन् भावे त त्व यण् इत्येते प्रत्यया भवंति। ब्राह्मणस्य भावो ब्राह्मणता। (त्वयणौ नपुंसकलिङ्गौ भवतः) ब्राह्मणत्वम्। ब्राह्मण्यम्। सुमनसो भावः सौमनस्यम्। सुभगस्य भावः सौभाग्यम्। विदुषो भावः वैदुष्यम्॥ २८॥

समाहारे ता च गुणः॥ २९॥

त्रयाणां समाहारः त्रेता। जनानां समूहो जनता। देवता।

कर्म्मण्यपि यण् वक्तव्यः॥ *॥

ब्राह्मणस्य कर्म्म ब्राह्मण्यम्। राज्ञ इदं कर्म्म राजन्यम्।

लोहितादेर्डिमन् ॥ ३० ॥

लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्त्वाट्टिलोपः । लोहितिमा अणोर्भावः अणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ॥ ३० ॥

ऋ र इमनि ॥ ३१ ॥

ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा । बहोर्भाव इति विग्रहे ॥ ३१ ॥

बहोर्लोपो भू च बहोः ॥ ३२ ॥

बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति बहोः स्थाने भूश्चादेशः । बहोर्भावो भूमा ॥ ३२ ॥

अस्त्यर्थे मतुः ॥ ३३ ॥

नाम्नो मतुप्रत्ययो भवति अस्यास्मिन्नस्तीत्ये-

तस्मिन्नर्थे । उकारो नुम्विधानार्थः । "उगितो नुम्" । गोमान् । श्रीमान् । गोमती । श्रीमती । आयुष्मान् ३३

## अइकौ च मत्वर्थे ॥ ३४ ॥

मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका अस्य अस्मिन् वा वैजयन्तः प्रासादः । माया विद्यते अस्यास्मिन्वा मायिकः ॥ ३४ ॥

## मान्तोपधाद्वत्विनौ ॥ ३५ ॥

मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यस्येत्यर्थे । किंवान् । लक्ष्मीवान् । भगवान् । धनी । दण्डी । छत्री । दृषद्वती भूमिः । शमी । कामी ॥ ३५ ॥

## तडितादिभ्यश्च ॥ ३६ ॥

तडित्वान् । विद्युत्वान् । मरुत्वान् ॥ ३६ ॥

एतत्किंयत्तद्भ्यः परिमाणे वतुः ॥ ३७ ॥

यत्तदोरा ॥ ३८ ॥

यत्तदोष्टेरात्वं भवति वतौ परे ॥ ३७ ॥ ३८ ॥

किमः किर्यश्च ॥ ३९ ॥

किम्-शब्दस्य किरादेशो भवति वतौ परे । चकारात्प्रत्ययस्य वकारस्य यकारो भवति । कियान् ॥ ३९ ॥

आइश्चैतदो वा ॥ ४० ॥

वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ वा भवतः । "गुरुः शिच्च" इति शित्वात्कृत्स्नस्य । आ इति गुरुस्तथापि चचरादन्तस्यैव टेराकारादेशो भवति न कृत्स्नस्य । यस्मिन् पक्षे आ इशादेशस्तस्मिन् पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति । एतावान् । इयान् ॥ ४० ॥

## तुन्दादेरिलः ॥ ४१ ॥

तुन्दादेरिलप्रत्ययो भवति अस्त्यर्थे । तुन्दमस्यास्तीति तुन्दिलः ॥ ४१ ॥

## औन्नत्ये दन्तादुरः ॥ ४२ ॥

उन्नता दन्ता यस्य सः दन्तुरः ॥ ४२ ॥

## श्रद्धादेर्लुः ॥ ४३ ॥

श्रद्धादेर्गणाल्लुप्रत्ययो भवति। श्रद्धास्यास्तीति श्रद्धालुः । दयालुः । कृपालुः ।

अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्यः ॥ तपोस्यास्तीति तपस्वी । मायावी । मेधावी । स्रग्वी ॥ ४३ ॥

## वाचो ग्मिनिः ॥ ४४ ॥

वाग्ग्मी ॥ ४४ ॥

## आलाटौ कुत्सितभाषिणि ॥ ४५ ॥

वाचालः । वाचाटः ॥ ४५ ॥

ईषदसमाप्तौ कल्पदेश्य-
देशीयाः ॥ ४६ ॥

ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः।पटुदेश्यः कविदेशीयः ॥ ४६ ॥

प्रशंसायां रूपः ॥ ४७ ॥

प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ ४७॥

भूतपूर्वे चरट् ॥ ४८ ॥

दृष्टचरः । दृष्टचरी ॥ ४८ ॥

प्राचुर्यविकारप्राधान्यादिषु
मयट् ॥ ४९ ॥

अन्नं प्रचुरं यस्मिन् सः अन्नमयः यज्ञः।मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः ।

तदधीते वेदेत्यत्राण् वक्तव्यः ॥ ❀ ॥

व्याकरणमधीते वेद वा वैयाकरणः।शोभनः-अश्वः स्वश्वः तं वेदेति सौवश्वः ॥ ४९ ॥

## न सन्धिय्वोर्युट् च ॥ ५० ॥

सन्धिजौ य्वौ सन्धिय्वौ तयोःसन्धिजयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति किन्तु तयोर्युडागमो भवति इट् उट् इत्येतावागमौ भवतः । वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः वकारात्पूर्वमुकारः । स्वरहीनं परेण संयोज्यम् ॥ "आदिस्वरस्य ञ्णिति च वृद्धिः।" वैयाकरणः॥ सौवश्वः ॥ ५० ॥

## इतो जातार्थे ॥ ५१ ॥

लज्जितः । पण्डितः । तृषितः ॥ ५१ ॥

## तरतमेयस्विष्ठाः प्रकर्षे ॥ ५२ ॥

अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवन्ति । अतिशयेन कृष्णः कृष्णतरः । अतिशयेन शुक्लः शुक्लतमः ।

ईयस्विष्ठौ डिताविति वक्तव्यौ ॥ ❀ ॥

उकारो नुम्विधानार्थः । न्सम्महत इति दीर्घः ।

अतिशयेन लघुः लघीयान् । अतिशयेन पापः पापिष्ठः।पापीयान्। पापीयसी। लघिष्ठः। लघीयान्। लघीयसी ॥ ८२ ॥

गुर्वादेरिष्ठेमन्नीयस्सु गरादिष्टय-
लोपश्च ॥ ८३ ॥

गुरु प्रिय स्थिर स्फिर उरु बहुल वृद्ध दीर्घ प्रशस्य बाढ युवन् अल्प स्थूल दूर अन्तिकानां क्रमेण गर्-प्र-स्थ-स्फ-वर्-बंह्-ज्या-द्राघ्-श्र-साध् यव्-कन्-स्थव्-दव्-नेद्-एते आदेशा भवन्ति।अतिशयेन गुरुः गरीयान्।गरिष्ठः।गुरोर्भावो गरिमा। अतिशयेन प्रियः प्रेयान्।प्रेष्ठः।प्रेमा। अतिशयेन स्थिरः स्थेयान्। स्थेष्ठः। स्थेमा। अतिशयेन उरुः वरीयान्।वरिष्ठः।अतिशयेन स्फिरःस्फेयान्। अतिशयेनः बहुलः बंहीयान्। अतिशयेन वृद्धः। ईलोपो ज्याशब्दादीयसः।ज्यायान्।ज्ये-

ष्ठः। अतिशयेन दीर्घः द्राघीयान्।द्राघिष्ठः।द्राघी-यसी।द्राघिमा।प्रशस्यस्य श्रादेशः।इष्ठस्यैकारस्य यि भवति।श्रेष्ठः।अतिशयेन बहुः भूयिष्ठः। ईयस ईलोपः।भूयान्।भूयसी।दूरस्य दवादेशः। दविष्ठः। दवीयान्।दवीयसी।क्षिप्रशब्दस्य क्षेपादेशः।क्षेपि-ष्ठः।क्षेपीयान्।क्षुद्रशब्दस्य क्षोदादेशः। क्षोदीयान्॥

बहोरिष्ठेर्यिः॥ ५४॥

बहोरुत्तरस्येष्ठप्रत्ययस्यैकारस्य यिर्भवति बहोः स्थाने भूश्चादेशः। भूमा। भूयिष्ठः।

किमोऽव्ययादाख्याताच्चतरतमयोराम्वक्तव्यः। *

कुतस्तरांपरमाणवः।कुतस्तमांतेषामारम्भकत्वम् उच्चैस्तरां गायति।पठतितमाम्।पचतितमाम् ॥

अव्ययसर्वनाम्नामकच्प्राक्टेः॥ ५५॥

उच्चकैः। यकः। सकः। सर्वकः॥ ५५॥

परिमाणे दघ्नादयः॥ ५६॥

परिमाणेर्थे दघ्नट्द्वयसट् मात्रट् इत्येते प्रत्यया भ-
वन्ति। जानुदघ्नं जलम्। शिरोद्वयसम्। पुरुषमात्रम्।

द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो
डतरडतमौ वक्तव्यौ ॥ ❀ ॥

कतरो भवतोः काण्वः। कतमो भवतां तान्त्रिकः।
भवतोर्यतरस्ता। किंकस्ततर उद्गाता॥ ५६ ॥

संख्येयविशेषावधारणे द्वित्रिभ्यां
तीयः ॥ ५७ ॥

द्वयोः संख्यापूरकः द्वितीयः। त्रयाणां संख्या-
पूरकः तृतीयः। त्रेः सम्प्रसारणम् ॥ ५७ ॥

षट्चतुरोस्थट् ॥ ५८ ॥

षष्ठः। चतुर्थः ॥ ५८ ॥

पञ्चादेर्मट् ॥ ५९ ॥

पञ्चमः। सप्तमः। अष्टमः। नवमः ॥ ५९ ॥

विंशत्यादेर्वा तमट् ॥ ६० ॥

विंशतितमः । विंशतिः ॥ ६० ॥

## विंशतेस्तिलोपो डिति ॥ ६१ ॥

विंशः । त्रिंशत्तमः ॥ ६१ ॥

## शतादेर्नित्यम् ॥ ६२ ॥

शततमः ॥ ६२ ॥

## एकादशादेर्डट् च ॥ ६३ ॥

एकादशः । द्वित्र्यष्टानां द्वात्रयोष्टाः । द्वादशः । त्रयोदशः । अष्टादशः ॥ ६३ ॥

## कतिकतिपयाभ्यां थः ॥ ६४ ॥

कतिथः । कतिपयथः ६४ ॥

## संख्यायाः प्रकारे धा ॥ ६५ ॥

द्विप्रकारं द्विधा । चतुर्धा । ( गुणो अण् च) द्वैधा त्रेधा । णित्त्वात् वृद्धिः । "यस्य लोपः" "अतोम्" द्वैधम् त्रैधम् ॥ ६६ ॥

## क्रियाया आवृत्तौ कृत्वस् ॥ ६६ ॥

पञ्चकृत्वः । सप्तकृत्वः ॥ ६६ ॥

## द्वित्रिभ्यां सुः ॥ ६७ ॥

द्विः त्रिरुक्तम् ॥ ६७ ॥

## बह्वादेः शस् ॥ ६८ ॥

बहुशः । शतशः ॥ ६८ ॥

## तयायटौ संख्यायाम् ॥ ६९ ॥

द्वितयम् । त्रितयम् । द्वयम् । त्रयम् ॥ ६९ ॥

## शेषा निपात्याः कत्यादयः ॥ ७० ॥

का संख्या येषां ते कति ॥ ७० ॥

॥ इति तद्धितप्रक्रिया समाप्ता ॥

इति सारस्वते व्याकरणे पूर्वार्द्धं संपूर्णम् ॥

॥ श्रीः ॥

# अथाऽव्ययार्थाः प्रारभ्यन्ते ।

श्रीसरस्वत्यै नमः ॥ च पुनरादौ ॥ वा विकल्पे ॥ ह स्फुटपादपूरणयोः ॥ अह खेदे ॥ एव अवधारणे निश्चये च ॥ पृथग्भिन्नार्थे ॥ विना वर्जने ॥ नाना अनेकविधार्थयोः ॥ स्वस्ति मांगल्ये ॥ अस्ति सत्तायाम् ॥ दोषा रात्रौ ॥ नक्तं रात्रौ ॥ मृषा मिथ्या असत्ये ॥ मिथस् रहस्सहार्थयोः ॥ अथ अथो आनन्तर्य्ये ॥ ह्योऽतीतेह्नि ॥ श्वस् अनागतेह्नि ॥ उच्चैस् उच्चे ॥ नीचैस् नीचे ॥ शनैस् क्रियामान्द्ये ॥ कृत्वस् क्रियावृत्तौ ॥ सत्यं सत्यार्थे ॥ स्वरिति स्वर्गे परलोके च ॥ अन्तर्मध्ये ॥ प्रतर् प्रत्यूषकाले ॥ पुनर् पौनःपुन्ये ॥ भूयस् पुनरर्थे ॥ अहो आहो आश्चर्ये ॥ स्वित् खेदे ॥ उत इति वितर्के सह सहार्थे ॥ अन्तरेण

विनार्थे ॥ अन्तरा मध्ये ॥ नमस् नतौ ॥ अलं भूषणपर्य्याप्तिशक्तिवारणेषु ॥ कृतं करणे ॥ अमानोनाः प्रतीषेधे ॥ ईषदिति अल्पे ॥ किल निश्चये वार्तायामलीके च ॥ खलु निषेधे वागलंकारे निश्चये ॥ नि निश्चये ॥ आराद्दूरसमीपयोः ॥ दूराद्दूरे ॥ भृशमतिशये ॥ ऋते विनार्थे ॥ साकं सार्द्धं सहार्थे ॥ समं तुल्यार्थे ॥(यत्तत्स्वराश्च) अ सम्बोधने अधि क्षेपे निषेधे च ॥ आ भयाश्चर्य्ययोः वाक्यस्मरणयोश्च ॥ इ ई भर्त्सने ॥ उ ऊ परदुःखवितर्कयोः ॥ ऋ ॠ लृवर्णा स्तोमे ॥ ए सम्बोधने ऐ आश्चर्य्ये ॥ ओ भवत्यर्थे ॥ औ अङ्गीकारे स्वधा पितृदाने ॥ स्वाहा देवहविर्दाने ॥ वषट् हविर्दाने ॥ वौषडिति हविर्दाने ॥ दिष्ट्या भद्रे बहिस् अवस् बाह्ये ॥ हन्त खेदे ॥ इत्यव्ययार्थास्समाप्ताः ॥ ॥ ॥

## अथ "इ यं स्वरे" इति सूत्रे पूर्वपक्षसिद्धान्तौ ।

श्रीगणेशाय नमः॥ ननु "इ यं स्वरे" इत्यस्मिन्सूत्रे इकारग्रहणं किमर्थम्। इकारग्रहणाभावेपि "यं स्वरे" वर्णो यत्वमापद्यते स्वरे परे इत्येव सिद्धे। षट् अत्रेत्यत्र दोषस्तु न। "परनित्यान्तरंगापवादानामुत्तरोत्तरं बलीयः" इति परिभाषाश्रयणात् "चपा अबे जबाः" इत्यनेन सूत्रेण डत्वप्रवृत्तेः। डत्वे कृते यत्वं तु न। डत्वविधानसामर्थ्यात्॥ न च मरुतावित्यत्र यत्वं स्यादिति वाच्यम्। तत्र संज्ञास्वरूपभंगभीत्या न यत्वमित्यदोषात्॥ न च पचतीत्यत्र यत्वं स्यादिति वाच्यम्॥ "ङणनोह्रस्वाद्विः स्वरे" इत्यतः ह्रस्वपदं "दीर्घाच्च" इत्यतः दीर्घपदं चानुवर्त्य षष्ठ्या विपरिणम्य ह्रस्वः दीर्घश्च वर्णो यत्वमापद्यते स्वरे परे इत्यर्थेन पच् अत्र ह्रस्वदीर्घयोरन्यतराभावेन न यत्वमित्यदोषात्॥ नच अञ्चती-

( १५८ ) "ह्रस्वं त्वरे" सूत्रोपरि पूर्वपक्षः।

त्यत्र यत्वापत्तेः व्यंजनं चार्धमात्रकमिति यतः कथितम् एकमात्रो ह्रस्वः इति ज्ञापकेन व्यञ्जनद्वयस्य ह्रस्वत्वादितिवाच्यम् । रञ्जदंशस्वंजसंजाम् एषां नस्य लोपोपि इति ज्ञापकादंचति इत्यत्र यत्वाभावादिति चेन्न, चिन्नुहि अत्रेत्यत्र दोषापत्तेः ॥ १ ॥

श्रीगणेशाय नमः ॥ ननु 'आपः' इदं सूत्रं किमर्थम् ॥ गंगा इति कथं स्यात् ॥ उच्यते । हसेपःसेलोंपः इति सूत्रे आपः इत्यस्य प्रश्लेषं कृत्वा साध्यते ॥ आ च ई च अनयोः समाहारः ए अया सहितःप् एप् हस्चएप्चहसेप्तस्मात् हसेपः । किमर्थम् ॥ क्लिष्ट-कल्पनासामर्थ्यान्न कर्त्तव्यम् । तदा दीर्घग्रहणं मास्तु ॥ तदा कीदृशं सूत्रं कर्त्तव्यम् ॥ अपः ॥ अबंतात्परस्य सेलोंपो भवति इत्येवम् ॥ अबतःस्त्रियाम् एतादृशं कर्त्तव्यम् ॥ पुनः किम् ॥ वाचा निशा दिशा इति कथं स्यात् ॥ तत्र तु भागुरीणां मतेन सिद्धम् ॥ यद्वा पचादित्वादः । पचादिराकृतिगणः । अकारान्तौ दिशनिशशब्दौ वाचा तुअसाधुरेव ॥ तर्हि पद्वीमतिक्रांतः यः इति विग्रहे अन्यार्थइत्यनेन ह्रस्वः ॥ तत्र सेलोंपः कथं न ॥ अत एव दी-

र्घग्रहणं कृतमिति सिद्धांते कथं न॥ तत्र पुनः आ आ इतिच्छेदः॥आकोर्थ आकाररूपात्सेर्लो-पः अत एवातिपट्टुरीति सिद्धम् ॥ २ ॥

इति पंडितरामाधीनसङ्कलितौ पूर्वपक्षौ सोत्तरपक्षौ सम्पूर्णौ ।

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-मुंबई.